समाप्ता चेयं शिष्यहिता नामावश्यकटीका कृतिः शिताम्बराचार्य**जिनभट**निगदानुसारिणो **विद्याधर**कुलतिलकाचार्य**जिनदत्त**शिष्यस्य धर्मतो **याकिनीमहत्तरा**सूनोरल्पमतेराचार्य**हरिभद्रस्य** ॥

यदिहोत्सूत्रमज्ञानात् व्याख्यातं तद् बहुश्रुतैः । क्षन्तव्यं कस्य संमोहश्छद्मस्थस्य न जायते ॥
यदर्जितं विरचयता सुबोधां पुण्यं मयावश्यकशास्त्रटीकाम् । भवे भवे तेन ममैवमेव भूयाज्जिनोक्ते तु मते प्रयासः ॥
अन्यच्च संत्यज्य समस्तसत्त्वा मात्सर्यदुःखं भवबीजभूतम् ।
सुखात्मकं मुक्तिपदावहं च सर्वत्र माध्यस्थ्यमवाप्नुवंतु ॥
नमो जगन्मंगलसंचयाय भगवते महावीराय धीमते । नमो मोहमहातिमिरभिदे नमो महावीरवर्द्धमानाय ॥

* * *

आन्तर्निःसीमदानोद्यतकृतिविलसत्कीर्त्तिकल्लोलिनीभिः स्वर्गंगायाः प्रवाहैरिव विशदमिदं संगमोत्कंठयेतः ।
कालिंदेव प्रयांत्योपपरिहरिणया नीलरत्नांशुभिन्नच्छायांभःस्रोतसा यद्वलयिमधिकं तीर्थभूतं विभाति ॥ १

ख्यातं **हिरिण्यनगरं** गुरु तत्र चित्रपत्रोपनिम्नसुवयः सुतरम्यशाखः ।
सद्गोत्रजोऽनुपमपर्व्वविराजमानो वंशोऽस्ति **हुंबडनृणां** शुभवर्णशाली ॥ २
तत्र स्ववित्तसुखतीकृतजंतुजातः कल्याणसंभृततया धनदायमानः ।
**श्रेष्ठ्यंबकः** सुहृदभून्न परंहरस्य मित्रं तथापि परमं स महेश्वराणाम् ॥ ३
अदक्षिणाशाऽपूर्वाशा न पराशा मनोमुदे । उत्तरेवोत्तमा भार्या तस्य **नाढी**ति विश्रुता ॥ ४
नलकूवर इव पुत्रः प्रेयान्वैश्रमणपितृपरमभक्तः । जज्ञेऽ**श्वनाग**नामा तस्या वित्तोपयोगपरः ॥ ५
**संपूर्णा** च **यशोदेवी** राकानुमतिसंनिभे । चंद्रस्येवास्य कान्ते द्वे प्रकाशे शुद्धपक्षतः ॥ ६
**संपूर्णा**याः सहुः·······वांछिततरं दानं वा·······तमं वाक् सुमानाम् ।
पुत्रो जज्ञे ज्ञानविज्ञानशाली शालीनात्मा **सर्वदेवा**भिधानः ॥ ७
**यशोदेव्या** यशोदायी कृत्यजातपरायणः । **वीर**नामाऽभवत्तस्य संजातौ द्वौ सुतोत्तमौ ॥ ८
सम्यग्बोधसुराचलेन मथिते मिथ्यात्वबंधा·······यौ चंद्रामृतसोपरी मदविषा वेगानभिज्ञापरम् ।
सौंदर्येण च यौः·······························**सर्वदेव**हरणे व·······कृताः ॥ ९
केनासौ मदनस्तृतीयनयनज्वालाकलापे हुतः किं ब्रूत त्रिपुरान्तकेन ननु सोप्याज्ञाति·······।
पीयूषं·······इत्थं·········यद्·······यद् पुत्रच्छलतश्चकार स पुनः पंचप्रकारं वपुः ॥ १०
ते चामी **धनदेवो वट ईलाकश्च केल्हणः खदिरः** । पंचापि पंचबाणानुकारिरूपा अपि सुशीलाः ॥ ११
ये च क्रीडासदनमनखे·········धा भरणं निभृते मूर्तिमान् पुण्यपुंजः ।
धन्यं धाम प्रणयिपरमाल्हादवृद्धेः समृद्धेर्बुद्धेः सिद्धेः शरणमरणिर्ध्यानवन्हेः शुभस्य ॥ १२
भगिनी तेषां **साढी**ति शीलसौंदर्य·······धत्ते । कुलटा-कुरूपाणामपि संवेगयतीव चेतांसि ॥ १३
**धनदेव**प्रमुखाणां **लक्ष्मीः सीता** च **रुरिमणी धान्धी** । भार्या **यशोमति**श्च क्रमेण जाता महासत्यः ॥ १४
याः कामधेनुप्रतिमा·············लाः । लीलाललामां अपि नव्यं(?)संवेगरंगांगणबद्धनृत्ताः ॥ १५
**लक्ष्म्याः** पुत्री **झल्ला सलक्षणा, नंदना**श्च **सीता**याः ।
**आभूश्च पार्श्वनाग**श्च **संतुक**श्चेति शान्तहृदः ॥ १६
भागिनेयोऽ**श्वदेवो**ऽभूद्देवतातिथिपूजकः । पुत्र्योऽपि ताद्दश्यस्तिस्र**श्चामी राजूश्च मोहिनी** ॥ १७
**धंधिकायाः** पुनः पुत्री **पूर्णिका** शीलशालिनी । **सर्वदेवो यशोमत्याश्च**·········॥ १८

इति सकलकुटुंबज्ञातिपीयूषपात्रं जिनपतियतिपूजादानदत्तावधानः।
अकृत सुकृतिरत्नं प्रातरन्येद्यु चिंतां सुगुरुगदितवाक्याद् **ईलकः** श्रावको यः॥ १९
इह हि जगति संपत् पंककाकारसारा रतिरपि मदमत्तप्रेयसीभ्रूविलोला।
ललितमपि वधूनां ध्वंसिवंतुश्च(?) बंधस्तदिह शरणमेकं धर्ममित्रं पवित्रम्॥ २०
सोऽनेकधा यद्यपि वादिमुख्यैर्निगद्यते मुक्तिकृते मुनींद्रैः।
तथापि तं दिवर्ज्जितान्य......................॥ २१
अतो विवेकैकविवृद्धिहेतु**रावश्यकं** यद्विधमप्यलेखि।
श्रेयःकृते स्वस्य त**दीलके**न कुटुंबमालोच्य घिवेकभाजा॥ २२

इतश्च—

श्रीचंद्रगच्छे समभूत्........**धर्मघोषः**। श्री**वर्द्धमानो** मुनिपो......मेन प्रार्थितः मुदा यः॥ २३
पट्टे तदीये निजबुद्धियोगात् निवित तत्रैदशसूरिबोधः (?)।
शुद्धांतरात्मा गुणरत्नभूरिः श्रीमान् श्रुतो......भुवि **देवसूरिः**॥ २४
......................भूव.......नूतिलकः। संसारांबुधिसेतुः केतुः साक्षादेवंगस्य (?)॥ २५
श्री**यशश्चंद्र**सूरेस्तु तत्पदस्थस्य पुस्तकम्। पठना**येल्लक**श्राद्धपुंगवेन समर्पितम्॥ २६
जीवाजीवादिवस्तुव्यतिकरलहरीभंगसंगाभिरामः
कारुण्यं सम्रवाहप्लवशमित(?) भवा सत्यसंतोषसंपत्।
यावत् सिद्धान्तसिंधुर्जयति जिनपतेः स्यात्पदोदात्तनक्र-
स्तावद् भूयाद् बुधानामयमपि रतये पुस्तकः पठ्यमानः॥ २७
**संवत् ११९२ वर्षे**......पुस्तकं **सिंधुराजेन** लिखितं इति॥ शुभं भवतु॥

[ * पुस्तकमिदं सुरक्षितमस्ति पट्टनस्थ-संघवीपाडासत्कभाण्डागारे। ]

# [ १० ]

## प्राग्वाटवंशीयसूहडादेवीश्राविकालेखित–पर्युषणाकल्पपुस्तिकाप्रशस्तिः।

[ लेखनसमयो नोल्लिखितः; परं वर्णनानुसारतः १३ शताब्दी अनुमीयते। ]

वंशः **प्राग्वाट**नामास्ति सर्ववंशशिरोमणिः। यो जातश्चित्रमाधारो महतामपि भूभृताम्॥ १
तत्राभूद् **भरतो** नामा पुरुषः पुण्यपूरितः। सदाचाराध्वपाथेयो धौरेयो धर्म्मधारिणाम्॥ २
सुतस्तस्य **यशोनागो** गुणानां जन्ममंदिरम्। यशोभिर्भृतभूभागः सुभगो वामचक्षुषाम्॥ ३
**पद्मसिंहः** सुतो जातस्तस्य सिंहपराक्रमी। येन भूपाज्ञया प्राप्तं पदं श्रीकरणादिषु॥ ४
जज्ञे **तिहुणदेवी**ति पत्नी तस्य शुभाशया। यया पितुश्च भर्तुश्च गुणैर्वंशो विभूषितः॥ ५
तयोः क्रमेण चत्वारस्तनयाः पुण्यशालिनः। आसन् धार्मिकधौरेयाः सुशीले द्वे च पुत्रिके॥ ६
तेषामाद्यो **यशोराज आशाराज**स्ततोऽपरः। तृतीयः **सोमराजा**ख्यश्चतुर्थो **राणका**ह्वयः॥ ७
**सोढुके**त्याख्यया ज्येष्ठा कनिष्ठा **मोहिणि**राह्वया। धर्म्मेण निर्ममे शुद्धे **सोढुका**हृदये पदम्॥ ८
महाव्यापारनिष्ठस्य **यशोराज**स्य वल्लभा। जज्ञे **सूहवदेवी**ति सतीसीमंतमौक्तिकम्॥ ९
तयोराद्यः सुतः **पृथ्वीसिंहा**ख्योऽभूत् कलाम्बुधिः। परः **प्रल्हादनो** नामा विजयी पुत्रिके उभे॥ १०

तन्मध्यात् **पेथुका**स्त्येकाऽपराऽभून्नाम**सज्जनी** । **प्रल्हादन**प्रियतमा **माधला**ऽस्ति विवेकिनी ॥ ११
**देवसिंहः सोमसिंहः** सुतौ द्वौ तिष्ठतस्तयोः । **पद्मला सद्मला राणी** तिस्रस्तिष्ठंति पुत्रिकाः ॥ १२
**पेथुका चंपलादेवीं नरसिंहं** महामनाः । **आसल**स्य प्रिया पुण्यं **हरिपाल**मजीजनत् ॥ १३
सुता **राजलदेवी**ति **चंपला**याः पतिव्रता । स्वकीयमातृशोकार्तिसंहारपरमौषधिः ॥ १४
वल्लभा **नरसिंह**स्य **नायकिदेवि**नामिका । तत्सुता **गौरदेवी**ति मातृवद्धर्म्मनिर्म्मला ॥ १५
विनीता **हरिपाल**स्य **माल्हणि**र्नामगेहिनी । नंदना जनितास्ताभ्यां चत्वारो रम्यमूर्तयः ॥ १६
**जगत्सिंह**स्य दयिता **सज्जना** तनयत्रयम् । प्रसूते स सुतां चैकां शीलालंकारडम्बराम् ॥ १७
ज्येष्ठस्तिहुण**सिंहा**ख्यः **पूर्णसिंहा**भिधोऽपरः । तृतीयो **नरदेवो**ऽथ तनया **तेजला**ह्वया ॥ १८
आस्ते **तिहुणसिंह**स्य **रुक्मिणी**नाम वल्लभा । तयोर्**लवणसिंहो**ऽस्ति सुतः सुता च **लक्ष्मा** ॥ १९
रंगात् **कटुकराजेन मोहिणिः** पर्यणीयत । चत्वारो नंदनास्ताभ्यां जनिता जनरंजनाः ॥ २०
पुत्र्यौ शीलपवित्रे च मूर्त्ती द्वे धर्म्मयोरिव । **पूर्णदेवी** तयोराद्या **वयजे**त्यपरा मता ॥ २१
धौरेयः **सोहियो** नाम **सहजा**काभिधोऽपरः । तृतीयो **रत्नपालो**ऽभूद**मृतपाल** इत्यथ ॥ २२
**सोहिय**स्य प्रिया ज्येष्ठा **ललितादेवि**संज्ञिता । तत्सुता **प्रीमलादेवी जैत्रसिंह**स्य वल्लभा ॥ २३
ताभ्यां जातौ कलावंतौ सुतौ द्वौ धर्म्मनिर्म्मलौ । परोपकारसामर्षो **धारावर्षो**ऽग्रजोऽभवत् ॥ २४
द्वितीयो **मल्लदेवो**ऽस्ति कुलालंकारकौस्तुभः । तत्प्रिया **गौरदेवी**ति श्वश्रूशुश्रूषणोद्यता ॥ २५
**सोहिय**स्य द्वितीयास्ति **शीलु**केत्याख्यया प्रिया । गुरुत्वगुणगंभीरा पतिभक्तिपवित्रिता ॥ २६
तयोरासीत्सुतो **भीमसिंह**नामाग्रजः सुधीः । महत्त्वसत्त्वमुख्यानां गुणानां जन्मभूमिका ॥ २७
परः **प्रतापसिंहो**ऽस्ति गुरूणां भारहारकः । नाम्ना **चाहिणिदेवी**ति प्रिया तस्यास्ति पावना ॥ २८
पुत्र्यौ द्वे **सोहिय**स्याथ **शीलुका**कुक्षिसंभवे । जाते जात्यमहारत्नतेजोनिर्मलमानसे ॥ २९
**नालदेवी** तयोर्मध्याद्याद्या दानविशारदा । परा **कील्हणदे**व्याख्या साक्षादिव सरस्वती ॥ ३०
आसीत् **सुहागदेवी**ति **सहजा**कस्य वल्लभा । तयोर्**मोल्हणदेवी**ति सुताऽस्ति शीलशालिनी ॥ ३१
विरक्तोऽ**मृतपालो**ऽथ सर्वान् संबोध्य मातुलान् । गच्छे श्री**मलधारी**णां व्रतं जग्राह साग्रहः ॥ ३२
**सोमराज**स्य वर्त्ति( व्रति ? )त्वं धर्म्मसीमासमन्वितम् । न केषामुपकाराय जातं वात्सल्यवारिधेः ॥ ३३
सुसाधोः **कुलचन्द्र**स्य विख्यातव्यवहारिणः । सुता **जासलदे**व्याश्च जैनधर्म्मेण वासिता ॥ ३४
नाम्ना **राजलदेवी**ति **राणक**स्य प्रियाऽभवत् । यस्यां सत्यां गृहे भर्तुः क्लेशलेशोऽपि नाजनि ॥ ३५
तयोः **संग्रामसिंहा**ख्यः सुतो जातोऽस्ति विश्रुतः । श्रियोपकुर्वता येन निजानां जगृहे मनः ॥ ३६
सुताऽभय**कुमार**स्य **सलक्षणा**ंगसंभवा । **सुहडादेवि**रस्यास्ति प्रिया दानदयाप्रिया ॥ ३७
तदीयो **हर्षराजो**ऽस्ति पुत्रस्वगोत्रपावनः । मातापित्रोः समादेशं यो न कुत्रापि लंघते ॥ ३८
**हर्षराजेन** रागेण **लखमादेवि**संज्ञिका । परिणीता विनीतात्मा सतीव्रतविभूषिता ॥ ३९
**गौरदेवी**ति नामास्ति कनिष्ठाऽस्य सहोदरा । पीयूषप्रायवचनैर्माननीया मनीषिणाम् ॥ ४०
सुत[ः] **संग्रामसिंह**स्य **सुहडादेवि**संभवः । नाम्ना **कटुकराजो**ऽस्ति द्वितीयो नयनामृतम् ॥ ४१
श्री**मलधारि**सूरीणां हितामाकर्ण्य देशनाम् । श्रेयसे **सुहडादेव्या** सिद्धान्तातीव भक्तया ॥ ४२
भर्तुः **संग्रामसिंहस्य** साहाय्याद् विशदाक्षरैः । पुण्या पर्युषणाकल्पपुस्तिका लेखिता नवा ॥ ४३
स्वामिनां शृण्वतां व्याख्याकारिणां पुण्यसंचयम् । वर्द्धयंती सदा सर्वैराचंद्रं वाच्यतामसौ ॥ ४४

॥ मंगलमस्तु ॥

[ * पुस्तकमिदं पट्टनस्थसंघसत्कभाण्डागारे विद्यते । ]

# [ ११ ]

## पल्लीपालवंश्यश्रीपाललेखित [हेमचन्द्रीय] अजितनाथादिचरित्रपुस्तकप्रशस्तिः ।

[ लेखनकाल १३०३ विक्रमाब्द ]

तन्वाना स्वकलाकलापमधिकं वर्यार्जवालंकृतं लक्ष्मीर्वैशनटीव यं श्रितवती प्रेंखद्गुणाध्यासितम् ।
रंगान्नोत्तरणाभिलाषमकरोद् व्यावर्ण्यतामागता **पल्लीपाल** इति प्रसिद्धमहिमा वंशोऽस्ति सोऽयं भुवि ॥ १
वंशेऽभवत्तत्र **सोही** मुक्तात्मा श्रावकाग्रणीः । स्विद्यन्महामहातेजा अजाड्योऽपि सुशीतलः ॥ २
तस्योढा सुगुणैः प्रौढा शुभधीः **सुहवा**भिधा । **पासणाग**स्तयोः पुत्र एक एव गुणैरपि ॥ ३
**पउसिरि**नाम्नी भार्या तस्याभूद्धर्मकार्यकृत् । तयोः पुत्रत्रयं पुत्रीद्वयं चाद्वंद्वमानसम् ॥ ४
तदादिमः **साजण**नामधेयः समुल्लसन्निर्मलभागधेयः । सत्यं च शौचं कलिराजभीतं हृद्दुर्गमाशिश्रयदाशु यस्य ॥ ५
धैर्येणाद्भुतराणकप्रतिकृतिर्जज्ञे ततो **राणको** दिक्चक्रं परिपूरयन् शुचियशोनिःश्वासदानोदयात् ।
योऽसाध्यत्परलोकमाशु हृदये श्री**वीर**नाम स्मरन् सद्धर्मेण गुणान्वितेन विशिखारोपेण सत्त्वोत्कटः ॥ ६
मोहादित्रयसंहर्ता तृतीय **आहडो**ऽभवत् । जिनधर्मरक्तचेता जेता दुःकर्मजालस्य ॥ ७

आद्या तयोरद्भुतधर्मधाम **पद्मी** द्वितीया **जसलं** च नाम्नी ।
दानादिधर्म्मांबुनिषेकयोगैरात्मा यकाभ्यां विमलोऽभ्यधायि ॥ ८

**सहजमतिः सज्जन**स्याभूत्पत्नी पतिव्रता । तत्पुत्री **रतधा** नामा सुतौ **मोहण-साल्हणौ** ॥ ९
**आहड**स्याथ भार्याभूच्**चांदू**श्चंद्रकलोज्ज्वला । पंचापत्यानि तयोः क्रमादिमानीह जातानि ॥ १०
तेषां **आशाभिधो** ज्येष्ठ **आशादेवी**ति तत्प्रिया । तयोर्बभूव सगुणा **जैत्रसिंहा**दिसंततिः ॥ ११
अद्वितीयो द्वितीयोऽपि **श्रीपाल** इति विश्रुतः । तत्पत्नी **वील्हुका** नाम्ना पुत्रो **वील्हा**भिधः सुधीः ॥१२
तृतीयो **धांधको** नामा कलत्रं तस्य **रुक्मिणी** । **लक्ष्मी**प्रियः **पद्मसिंह**स्तुर्यो **रत्ना**द्यपत्यकः ॥ १३
पुत्री च जज्ञे **ललतू**र्ललसा धर्मकर्मणि । **वास्तू**श्चास्यांगजा जाता व्रतान्**मदनसुन्दरी** ॥ १४
**कर्पूरी** च तथा **पद्मसिंह**जा **भावसुन्दरी** । **कीर्तिश्री**गणिनीपादौ द्वाभ्यामाराधितौ मुदा ॥ १५
न्यायोपात्तस्य वित्तस्य फलं धर्मनियोजनम् । अनर्घ्यस्येव रत्न[ स्य यथा ]किरीटकादिषु ॥ १६

परोपकाराच्च परो न कश्चिदत्रास्ति धर्मो भुवनत्रयेऽपि ।
[ सोऽपि ] श्रुतात्तच्च सुपुस्त[क]स्थं व्याख्यायमानं दुरितावसानम् ॥ १७

श्रीमत्**कुलप्रभ**गुरोराकर्ण्यैवं विशुद्धमुपदेशम् । मोहादिकदनकालः **श्रीपालो** धर्मसुविशालः ॥ १८
दुःप्रतिकारौ पितराविति च ज्ञात्वा पितुः सुकृतहेतोः । **अजितादि-शीतलांतं** सुपुस्तकं लेखयामास ॥ १९

—चतुर्भिः कलापकम् ।

**त्र्यग्रत्रयोदशशतेषु** [ गतेषु ? ] सत्सु श्री**विक्रमाद्** विधियुतं सुधियां च तेन ।
व्याख्यापितं च सु**कुलप्रभसूरि**पट्टलक्ष्मीविशेषक**नरेश्वरसूरि**पार्श्वात् ॥ २०

यावत्तारकचक्रघर्घरधरो दिक्कुंभिशैलस्तवान् मेरुश्चारुनटः प्रताडयति तज्ज्योत्स्नालतातंतुभिः ।
वध्वा व्योममृदंगकं रविशशिप्रोद्यत्पुटद्वंद्वकं तावन्नंदतु पुस्तकोऽयमसकृद् व्याख्यायमानो बुधैः ॥ २१

**संवत् १३०३ वर्षे कार्तिकशुदि १० रवा**वद्येह श्री**भृगुकच्छे** ठ० **समुधरेण** पुस्तकं लिखितमिति ॥छ॥

[ * पट्टनस्थसंघवीपाडासत्कभाण्डागारे विद्यते पुस्तकमिदम् । ]

# [ १२ ]

## ओशवालवंशीयपद्मश्रीश्राविकालेखितपञ्चमीकथापुस्तिकाप्रशस्तिः ।

[ लेखनकाल १३१३ विक्रमाब्द ]

**संवत् १३१३ वर्षे चैत्रशुदि ८ रवौ** महाराजाधिराज**श्रीवीसलदेव**कल्याणविजयिराज्ये तन्नियुक्त**श्रीनागड**महामात्ये समस्तव्यापारान् परिपंथयतीत्येवं काले प्रवर्तमाने **प्रल्हादनपुरे**···**जिनसुंदरिगणिन्या** ज्ञानपंचमीपुस्तिका लिखापिता ॥ छ ॥

शाखासहस्रमहिते वंशेऽस्मिन्**नोशवाल**साधूनाम् । आसीद् **वीरक**नामा **वालिणि**हृदयाधिदैवतं धीमान् ॥ १
श्रीमा**नाम्रकुमारो** मारतनुः **श्रीकुमार**नामा च । **जसदू-शालिक**संज्ञौ तत्तनयाः **पूर्णचंद्र** इति पंच ॥ २
भगिनी विनयाचारशालिनी गुणमालिनी । **पुण्यश्री**रभवत्तेषामिंद्रियाणां सुधीरिव ॥ ३
**लाली** शालीनविनया **श्रीकुमार**हृदीश्वरी । असूत सूतमन्यूनवसुदं **बहुदा**भिधम् ॥ ४
**आम्वो धनाम्व**सावथ **जेसल-गुणदा**वसूत **विजयमतिः** ।
तद्भार्या त्वथ **केल्हीं राज्जीं** च **सरस्वतीं** स**सोमलताम्** ॥ ५
**पद्मश्री**रिति निश्छद्मचरिता दुरितोज्झिता । द्वितीया **बहुदा**कस्य प्रियाऽसूत सुतानिमान् ॥ ६
**वाहडं चाहडं चाम्रदेव सा**···लसंज्ञकौ । **गांगदेवं** तथा **जाल्हूं** तनयां विनयानताम् ॥ ७
**पद्मश्री**श्चलतां स्वकीयवयसां विज्ञाय वाक्यैर्गुरोः
पुण्यश्रीमनिशं समृद्धिमधिकं नेतुं विसर्प्पन्मतिः ।
न ज्ञा[ ना ]मृतपानतोऽस्त्यधिकमित्याधाय चित्ते मुहुः
सद्वर्णावलिशालिका······वती यत्पंचमीपुस्तकम् ॥ ८
इदं **ललितसुंदर्यै** गणिन्यै गुणशालिनी । सच्चरित्रपवित्रायै सा ददौ सम्मदोदयात् ॥ ९

[ * पट्टनस्थसंघवीपाडासत्कभाण्डागारे स्थितमिदं पुस्तकम् ]

# [ १३ ]

## प्राग्वाटवंशीयश्रे० सेवाकलेखित–परिशिष्टपर्वपुस्तकप्रशस्तिः ।

[ लेखनकाल १३२९ विक्रमाब्द ]

····संपूर्णं चेदं परिशिष्टपर्वम् ॥ छ ॥

ॐ ॥ दुष्टाष्टकर्मेभजयावदातः साक्षात्तपःसिंह इवांकदंभात् ।
सुखाभिभक्त्या वरिवस्यति स्म पादाम्बुजं यस्य मुदे स **वीरः** ॥ १
इतश्चास्ति धरापीठे ग्रामो···············भिधः । विधिपक्षविधुक्षीरनीरधिः पुण्यशेवधिः ॥ २
**प्राग्वाटवंश** उदितोदितवंशधुर्यः श्लाघ्यः स तत्र भवति स्म सुखेन यत्र ।
वंश्यैः स्थितै···········ते सुरश्रीः किं दम्नतामनुपमस्य न तस्य विघ्नः ॥ ३
आसीत् **शुभंकर**स्तत्र पुराणः पुरुषः पुरा । **सेवा**भिधश्च तत्सूनुस्तत्पुत्रश्च **यशोधनः** ॥ ४
**उद्धरण-सत्यदेवौ श्रीमलयप्रभपितृसुमदेव**श्च । **बाहू** नामा तुर्यो **लीलाक**स्तत्सुताः पंच ॥ ५

मिथ्याभाववसुंधराधरचरत्पक्षच्छिदा स्वःपते-
**बोंढूक**स्य सुतास्त्रयस्त्रिभुवनालंकारभूतास्ततः ।
संजाता जनपावना भुवि मरुत्सिंधोः प्रवाहा इव
साक्षाद् **दाहड-लाडणौ सलषमौ** किं वा पुमर्था इव ॥ ६
**लषमिणि-सुषमिणि-जसहिणि-जेहि**संज्ञाः सुताश्चतस्रश्च ।
संजाताः सुपवित्राः श्रुतयः किमु वेधसो नैताः ॥ ७
नामतः **सिरियादेवी दाहड**स्याजनि प्रिया । सिद्धांतविधिना तेपे योपधानाभिधं तपः ॥ ८
**सोलाको बासलः** श्रीमन्**मदनप्रभ**सूरयः । **वीरूक**श्च तत्पुत्राः चत्वारः सागरा इव ॥ ९
**साउं**नाम्नी च पुत्र्यासीत् **सोलाक**स्य तत्पुनः । प्रिया प्रियंवदा शांता लक्ष्मश्री**र्लक्ष्मणा**जनि ॥ १०
सद्धर्मद्रुवनीव पंच तनयान् कुन्तीव सा पांडवान्
प्रव्रज्येव महाव्रतानि वसुधा मेरूनिवाजीजनत् ।
आद्यां**बूंदयचंद्रसूरि**तनयौ **चांदाक-रत्नौ** ततः
**वाल्हाक**श्च तथा······स्तदनु सा **धाल्ही** च पुत्रीद्वयम् ॥ ११
·····························[ एतत्पद्यं विनष्टमत्र ]·············································॥ १२
तत्पुत्रः **पासवीरा**ख्यः **बाहडश्छाहड**स्तथा। **वाल्ही** च **दिवतिणि**श्चैव **वस्तिणि**श्च सुतास्तथा ॥ १३
**चांदाक**स्य सुतौ जातौ पुष्पदंताविवोज्वलौ । **पूर्णदेव**स्तयोराद्यः **पार्श्वचंद्रो** द्वितीयकः ॥ १४
**सीलू-नाउलि-देउलि-झणकुलि**मुख्याः सुताश्चतस्रश्च ।
**नाउ**रात्तचरित्रा **जिनसुंदरि**नामिका साध्वी ॥ १५
**पूर्णदेव**स्य कांताऽभूत् **पुण्यश्री**रिति संज्ञया । तत्सुतः सद्व्रती विद्वान् गणि**र्द्धनकुमारकः** ॥ १६
**चंदनबाला** च संजाता गणिनी तत्सुता तथा । **रत्न**सुतः **पाहुला**ख्यस्तत्पत्नी च **जल्लिका** ॥
पुत्रः **कुमारपाल**श्च **महीपाल**श्च तथा परः ॥ १७
**वाल्हाक**स्य सुतः साधुग्रामणीर्मुनिकुंजरः । नाम्ना **ललितकीर्ति**श्च सतां पापतमोपहः ॥ १८
**बाहड**स्य च सत्पत्नी नाम्ना जज्ञे **वसुंधरिः** । तत्सुतो **गुणचंद्रा**ख्यः सुता **गांगी** च विश्रुता ॥ १९
**रुक्मिणी कुलचंद्र**स्य नाम्ना कांताऽभवत्सती । **छाहड**स्य च भार्याभून्नाम्ना **पुण्यमती** सती ॥ २०
**धांधाक**स्तत्सुतो जातः पुत्र्यौ **चांपल-पाल्हुके** । तत्पत्नी **माल्हणि**रिति पुत्रो **झांझण**नामकः ॥ २१
श्रेष्ठिनः **पासवीर**स्य नाम्ना **सुखमतिः** प्रिया । यद्गुणैर्निर्मलैश्चित्रं निःशेषो रंजितो जनः ॥ २२
**सेवा**भिधानस्तनयस्तदीय आद्यो द्वितीयो **हरिचंद्र**नामा ।
श्रेयान् गुणैः श्री**जयदेवसूरि**र्**भोलाक**नामा च सुतस्तुरीयः ॥ २३
**लडही-खींवणि**नाम्न्यौ पुत्र्यौ जाते महासत्यौ । **सेवाक**स्य समजनि **पाल्हणदेवी**ति सत्पत्नी ॥ २४
**भोलाक**स्य च दयिता **जाल्हणदेवी**ति विश्रुता [ लोके ] । एतद्धर्मकुटुंबं संजातं **पासवीर**स्य ॥ २५
······················**[ अत्र मूलादर्शे पत्रस्य द्वितीयं पार्श्वं सर्वमपि विगताक्षरं सञ्जातं**
**ततः २६ पद्यादारभ्य ३३ पर्यन्तानि पद्यानि विनष्टानि ]**··········
·············वसना चंद्रार्कसत्कुंडला प्रेंखंस्तारकमालिकावलयितं प्रोत्तम्य मेरुं करम् ।
यावन्नृत्यति तावदत्र जयतात् स्वश्रेयसे लेखितं **सेवा**केन सुपुस्तकं मुनिजनैस्तद्वाच्यमानं चिरम् ॥ ३४

श्रीविक्रमार्कनृपतेः समयादतीते प्रेंखत् **त्रयोदशशते** शरदामनूने ।
**एकोनत्रिंशति** शुचौ लिखितं दशम्यां संधाय पुस्तकमिदं प्रददातु भद्रम् ॥ ३५

**सं० १३२९ वर्षे श्रावणसुदि ८ वरदेव**पुत्रलेखक**नरदेवेन** लिखितं । परिशिष्टपर्वपुस्तिका समाप्ता ॥

[ * पुस्तकमिदं पट्टनस्थसंघवीपाडासत्कभाण्डागारे विद्यमानमस्ति । ]

# [ १४ ]

## श्रीमालवंशीय-श्रे०तेजःपाल-लेखित–पर्युषणाकल्प-पुस्तिकाप्रशस्तिः* ।

**[ लेखनकाल १३३० विक्रमाब्द ]**

पायाद्वः पूर्वतीर्थस्य शिखाली श्रोत्रयोरधः । दग्धाष्टकर्मकक्षस्य धूमलेखेव लक्ष्यते ॥ १
भूयात्सद्भाविनां भूरि भग्नसंसारविभ्रमः । स्वर्मोक्षफ[ल]दः स्वामी श्रीवीरः कल्पपादपः ॥ २
अस्ति भूमंडलव्यापी वंशो वंशोत्तमः किल । श्रीमद् **श्रीमाल** इत्याख्यो **लक्षशाखा**भिर्विश्रुतः ॥ ३
प्रसिद्धपुरुषप्रक्षा यस्य च्छायानिषेविनः । इहैवाद्यापि[1] दृश्यंते तद्विदः श्रुतिकोविदाः ॥ ४
तद्वंशसंभवो जैनश्रेयसैनःप्रखंडनः । बभूव **वूटडि**श्रेष्ठी सुदृष्टिः श्राद्धसत्तमः ॥ ५
पत्नी **धांधलदेवी**ति शीलस्वकुलपावनी । हंसवत्खेलते यस्या जैनश्रेयः सुमानसे ॥ ६
तत्तनूजो जितक्रोधस्**तेजःपालो**ऽस्ति धर्म्मधीः । यस्याद्यजिनपादाब्जे भृंगवद्रमते मनः ॥ ७
शीलसद्गुणतः स्वच्छा **लच्छी**संज्ञाऽस्ति तद्वधूः । जैनपुण्यायने रक्ता सद्गुरुप्रणतौ नता ॥ ८
पवित्रचारुचारित्ररत्नराशिमहार्णवः । **गणिश्रीदेव[चं]द्रो**ऽभूत्संयमाधृतसंभृतः ॥ ९
तत्पट्टव्योमसोमस्य सदा सद्वृत्तशालिनः । श्रीमद्**विजयचंद्र**स्य सूरिणः सद्गुरोर्मुखात् ॥ १०
आकार्ण्य कर्ण्णसुखदां विशदां धर्मदेशनाम् । ततः संजातसद्भावः सिद्धांतोद्धारकारणे ॥ ११
अथ **पर्युषणाकल्प**मनल्पश्रेयसःपदम् । विभाव्य व्यक्तवर्ण्णाढ्यां लेखायामास पुस्तिकाम् ॥ १२
यावच्चंद्र-दिवानाथौ यावद् व्याप्ता वसुंधरा । विबुधैर्वाच्यमानाऽसौ तावन्नंदतु पुस्तिका ॥ १३

**संवत् १३३० श्रावणवदि १२ रवौ** पुस्तिका लिखितेति ॥ शिवमस्तु सुश्रावकेभ्यः ।

# [ १५ ]

## श्रीमालवंशीय-श्रे०लाडण-लेखित–सूक्तरत्नाकर-पुस्तिकाप्रशस्तिः† ।

**[ लेखनसमय १३४७ विक्रमाब्द ]**

[ ग्रन्थान्ते– ] यस्मिन् पुष्यति विश्वविस्मयकरे स्वःश्रेणिनिःश्रेणिका, द्रागंगप्रतिमां पदस्थितिमतीद्वारां चतुःसप्ततिः ।
सोयं भव्यजनप्रबोधजनको धर्माधिकारः पुरः, काव्ये सर्वरहस्यवीचिनिचिते श्री**सूक्तरत्नाकरे** ॥

इति श्रीसूक्तिरत्नाकरनामनि महाकाव्ये धर्माधिकारोऽयं प्रथमः संपूर्णः ॥ ग्रंथाग्रं ४३४० ॥ मंगलं महाश्रीः ॥

**विद्यासिंह**तनूद्भवः सुचरितो **वैजल्लदे**व्यंगभूः, श्रीमन्**मन्मथसिंह** एष विदधे श्री**सूक्तरत्नाकरम्** ।
नानाशास्त्रगृहीतसूक्तलहरीलीलायितं तत्र सत्, धर्माख्यं प्रथमं समाप्तमखिलं द्वारं निदानं श्रियः ॥ १ ॥ छ ॥

---

* पुस्तकमिदं पट्टनस्थसंघसत्कभाण्डागारे रक्षितमस्ति ।

१ 'प्राग्रा' इति टिप्पनी । २ 'कोटिशोपि हि' इति टिप्पनी ।

† पट्टनस्थसंघवीपाडासत्कभाण्डागारे विद्यतेयं पुस्तिका ।

[प्रशस्तिः–]······································[॥ १ ॥]
सुपर्वः सरलोत्तुंगः शाखाशतसमावृतः । श्रीमान् **श्रीमाल**वंशोऽस्ति सर्वत्रापि प्रमाणकृत् ॥ २ ॥
श्रेष्ठी **जयंत** इत्यासीत् तत्र मुक्तामणेः समः । **पातू** नाम्नी च तत्पत्नी गेहलक्ष्मीरिवांगिनी ॥ ३ ॥
श्रीसंघकृत्यधौरेयाः सम्यक् सम्यक्त्वशालिनः । तत्पुत्राः क्रमशोऽभूवन् गुरुभक्तिभृतो ह्यमी ॥ ४ ॥
विद्वान् **महणनामा**द्यो **मदना**ख्यो महत्तमः । **सामंतो झांझणा**ख्यश्च **लाडणो**ऽनल्पवासनः ॥ ५ ॥
**वयजू तेजू** च सुते सुदुस्तपस्तपोंचिते । **लाडण**स्य तु **ललतादेवी**ति दयिताऽभवत् ॥ ६ ॥
तत्सुता **अरिसिंहा**द्याः; एवं वंशे विवर्द्धिते । श्री**रत्नसिंह**सुगुरो**र्लाडणो** धर्ममशृणोत् ॥ ७ ॥
ततः स्वस्यैव पुण्यार्थी सूक्तरत्नाकरस्य तु । चतस्रः पुस्तिकाः पुण्या लेखयामास **लाडणः** ॥ ८ ॥
ज्योतिर्मुक्तावतंसा रविरजनिकरस्फारताडंकपत्रा, ज्योत्स्नाकॢप्तांगरागा जलनिधिवसना स्वर्णदीहारयष्टिः ।
यावन्नर्नर्तिकीर्तिश्चरमजिनपतेर्विश्वरंगेऽत्र तावत्, मन्द्रकाख्याननादैः कलयतु तुलनां दुंदुभेः पुस्तकोऽयम् ॥ ९ ॥

**सं० १३४७ वर्षे आषाढवदि ९ गुरौ आशापल्यां** महं **वीरमेन** श्रीसूक्तरत्नाकरपुस्तिका लिखिता ॥

# [ १६ ]

## प्राग्वाटवंशीय-श्रीमत्पेथड-लेखित–भगवतीसूत्र–पुस्तकप्रशस्तिः* ।

[ लेखनकाल १३५३ विक्रमाब्द ]

श्रीद्वादशांगहिमरश्मिसमुद्रतुल्याः कल्याणपंकजविकाशनभानुभासः ।
अज्ञानदुस्तरतमोभरदीपिकाभा विश्वं पुनातु किल वीरजिनस्य वाचः ॥ १
सम्यक्सम्यक्त्वसिंहाश्रितसुकृतिमनःकंदरः स्थैर्यसारः, प्रस्फूर्ज्जत्कीर्तिचूलो विनयनयशमामूल्यरत्नाभिरामः ।
दानाद्युद्दामधर्मप्रवरवनवृतः श्रीसमिद्धः पृथिव्या-मस्ति **प्राग्वाटवंश**स्त्रिदशगिरिरिवानेकसत्कृत्यशृंगः ॥ २
योऽचीकरन्मंडपमात्मपुण्यवल्लीमिवारोहयितुं सुकर्म्मा । ग्रामे च **संडेरक**नाम्नि वीरचैत्येऽजनि श्रेष्ठिवरः स **मोखूः** ॥ ३
**मोहिनी**नाम तत्पत्नी चत्वारस्तनयास्तयोः । **यशोनागो** धर्मधुर्यः **वाग्धनः** शुद्धदर्शनः ॥ ४
**प्रल्हादनो जाल्हणश्च** गुणिनोऽमी तनूभवाः । **वाग्धनस्य** गृहिण्यासीत् **सीतू** सम्यक् शीलभाक् ॥ ५
तत्कुक्षिभूस्तत्पुत्र**श्चांडसिंहो** विशुद्धधीः । सद्धर्मकर्मनिष्णातो विनयी पूज्यपूज्यकः ॥ ६
पंचपुत्र्योऽभवन् **खेतू मूंजल-रत्न**देव्यथ । **मयणल**·······सर्वा निर्मला धर्मकर्मभिः ॥ ७
इतश्च–**बीजा**भिधोऽभवन्मंत्री **खेतू** नाम्नी च तत्प्रिया । तत्पुत्री **गोरिदेवी**ति पुण्यकर्मसु सोद्यमा ॥ ८
तां तूढवां**श्चांडसिंह**स्तत्तनूजा गुणोज्वलाः । आद्यः **पृथ्वीभटो** धीमान् **रत्नसिंहो** द्वितीयकः ॥ ९
वदान्यो **नरसिंहश्च** तुर्यो **मल्ल**स्तु विक्रमी । विवेकी **विक्रमसिंह-श्चाहडः** शुभाशयः ॥ १०
**मूंजाल**श्चेत्यमीषां तु कल्याणाय कृतोद्यमा । स्वसा **खोखी** रता धर्मे पञ्चश्चैषां क्रमादिमाः ॥ ११
प्रथमा **सूहवदेवी सुहागदे**व्यथापरा । निपुणा **नयणादेवी प्रतापदे**व्यथा मता ॥ १२
**सीटला चांपलादेवी** पुण्याचारपरायणा । आसां च पुत्राः पुत्र्यश्चाभूवन् भाग्यभरांचिताः ॥ १३
श्रेष्ठि······धनस्येव देशे (?) वृद्धिमुपेयुषि । श्री**रत्नसिंह**सूरीणां पार्श्वे शुश्राव देशनाम् ॥ १४
**पेथडः** प्रवराचारः प्रयुक्तो निजबंधुभिः । जनकस्य सदा भक्तो रक्तो धर्मगुणार्जने ॥ १५

---

* पट्टनस्थसंघवीपाडासत्कभाण्डागारे पुस्तकमिदं सुरक्षितम् ।

दानं धनस्योत्तममस्ति लोके ज्ञानात्पुनस्तत्कथितं जिनेन्द्रैः ।
तत्रापि सिद्धांतसमं न ज्ञानं दानं तु तस्यैव महत्प्रधानम् ॥ १६

इत्याकर्ण्य स गौतमस्य वदनांभोजे सुभृंगावली-कल्पं चैवमलीलिखद् **भगवतीसूत्रं सटीकं** मुदा ।
श्रीसिद्धांतविचारसार······································**पेथडः** ॥ १७
**वेदँ-बाणेँ-हुताशेँ-दुँ**-मिते **विक्रम**वत्सरात् । वर्षे पुस्तकव्याख्यानं कारयामास यः पितुः ॥ १८
तिग्मांसो युवराजतां सचिवतामारोप्य जीवे कवौ छायाक्ष्मासुतयोः पुरावनपदं सल्लेखकत्वं बुधे ।
राज्यं तारकपत्तियुक् प्रकुरुते स्वं दक्षजे······································प्रकाशं सताम् ॥ १९

**संवत् १३५३ वर्षे** अद्येह **वीजापुरे सोमतिलकसूरिभिः** श्रीभगवतीसूत्रपुस्तकव्याख्यातं । वाचितं पं० **हर्षकीर्ति**गणिना ॥ शुभं भवतु । श्रीसकलसंघस्य ॥ छ ॥

# [ १७ ]

## गूर्जरवंशीय-साधुमहणसिंह-लेखित [ भावदेवसूरिकृत ] पार्श्वनाथचरित्र-पुस्तकप्रशस्तिः* ।

**[ लेखनकाल १३७९ विक्रमाब्द ]**

जयति विजितान्यतेजाः सुरासुराधीशसेवितः श्रीमान् । विमलस्त्रातविरहितस्त्रिलोकचिन्तामणिर्वीरः ॥ १
सद्धर्महेतुः सरलस्वभावः सुपर्वरम्यः कलशब्दशाली । मुक्ताफलारंभ इह प्रसिद्धः श्रियान्वितो **गूर्जरवंश** एषः ॥ २

**सौम्यो**ऽजनि प्रवरधीर्विपुलेऽत्र वंशे यः सोमकान्त इव सज्जनदर्शनीयः ।
श्रीम**ज्जिनप्रभ**विभोर्भवभित्प्रसादमासाद्य सद्गुणनिधिर्विदधे सुधर्म्मम् ॥ ३

तस्य मुक्ताफलप्रायौ द्वौ सुतौ सुकृतोज्ज्वलौ । आद्यो **वर्णक**नाम्ना तु द्वितीयोऽभून् **मदना**भिधः ॥ ४
**वर्णक**स्य प्रिया जज्ञे **वील्हणदेवी**ति नाम्नी । तत्कुक्षिसरसीहंसा जाता षट् सहोदराः ॥ ५
आद्यः **कामा**भिधानस्तु द्वितीयः **शोभन**धीरधीः । **पेथड**स्तृतीयोऽभूच्चतुर्थः **कृष्ण**नामतः ॥ ६
**अर्जुनः** पंचमो जातः षष्ठोऽ**भयसिंहा**भिधः । पुत्री **हांसी**ति विख्याता सतीत्वगुणशालिनी ॥ ७
**शोभनदेव**स्य प्रेयस्यासीत्सुशीलसंयुता । नामतः **सुहडादेवी** भूरिगुणविभूषणा ॥ ८
तस्यां च गुणशालिन्यां जाताः सप्त सहोदराः । निर्मलेन चरित्रेण राजंते ऋषिवत्सदा ॥ ९

तेषु मुख्यपदवीसमाश्रितो विश्रुतोऽस्ति विनयादिसद्गुणैः ।
धर्मकर्मणि तथाभिधानतो यः **सल्लक्ष** इह सज्जनाग्रणीः ॥ १०

तस्यास्ति दयिता साध्वी देवी **भावल**नामतः । तस्याः कुक्षिमलंचक्रे पुत्ररत्नचतुष्टयी ॥ ११
**सोमः** सौम्यगुणोपेतः ततो जज्ञे नरोत्तमः । दानादिकचतुर्भेदधर्माराधनतत्परः ॥ १२
**श्रीदेवी** तस्य दयिता भाति सर्वगुणोत्तमा । देवताराधने रक्ता सीलालंकारधारिणी ॥ १३
दानसौंडो रतो धर्मे विवेकीति विशारदः । **सोढला**ख्यस्तृतीयस्तु देवी **संगार** वल्लभा ॥ १४

---

* पुस्तकमिदं पट्टनस्थ-संघवीपाडासत्कभाण्डागारे विद्यते ।

तस्याः कुक्षिसरस्यां च राजहंस इवामलः । अवतीर्णो **वज्रसिंहः** कर्माद्रौ वज्रसन्निभः ॥ १५

तस्यानुजो विजयते जगति प्रतीतः सौभाग्यभाग्यसुविवेकविराजमानः ।
यस्याख्यया **नरपति**र्नृपमाननीयो सत्त्वोपकारकरणैकरसात्मकश्च ॥ १६

**नरपतेः** प्रिया चास्ति **नीनदेवी**ति शुद्धधीः । प्रसूता सा सुतं भव्यं **नरसिंहा**भिधोऽस्ति यः ॥ १७
**नरपते**रनुजोऽस्ति **धरणः** साधुधीरधीः । अभिधा **नायकिदेवी** प्रिया प्रियगुणान्विता ॥ १८

श्रद्धाजलेन विमलेन सुशीतलेन संपूरिते सुकृतनीरजराजमाने ।
सन्मानसे लसति यस्य विवेकहंसः सोऽयं जयी **महणसिंह** इति प्रतीतः ॥ १९

**भीणला**ख्या प्रिया तस्य प्रभूतगुणशालिनी । मान्या स्वजनवर्गेषु सदौचित्यपरायणा ॥ २०

अन्यच्च – नित्यां प्रपां ज्ञानसुधारसाढ्यां तत्त्वोपदेशासमसत्रगेहाम् ।
मोहांधकारेषु समीपदीपं सत्पुस्तकं लेखयतीह धन्यः ॥ २१

इत्यादिदेशनां श्रुत्वा सुपुत्रः कुलदीपकः । साधु**महणसिंहा**ख्यो गुणग्रामपवित्रितः ॥ २२
**श्रीवामेयजिनेशस्य** स्वपितुः श्रेयसे मुदा । पवित्रस्य चरित्रस्य पुस्तकोऽयमलीलिखत् ॥ २३

**नंद-शैल-शिखि-चंद्र**वत्सरे **रत्नपूर्वतिलका**ख्यसद्गुरोः ।
**ज्ञानकीर्त्य**भिधशिष्यसन्मुनेः पुस्तकं च विधिना प्रदत्तवान् ॥ २३

**संवत् १३७९ वर्षे अश्विनसुदि १४ बुधे गूर्जरज्ञातीय** साधु **शोभनदेव**सुत साधु**महणसिंहेन** श्रीपार्श्वनाथचरित्रपुस्तकं लेखयित्वा पं० **ज्ञानकीर्त्तेः** प्रदत्तम् ॥
दानेन धर्मेण सदैव सोढः विराजते सर्वजनस्य सौख्यम् । द्रव्येण कायेन तथैव वाचा कर्ता च लब्ध्वा सुकुले प्रसूतिं ॥

# [ १८ ]

## श्रीमालज्ञातीय-श्राविकामोखल्लदेवी-लेखित-[ हेमचन्द्रीय ] शान्तिजिनचरित्र-पुस्तकप्रशस्तिः* ।

**[ लेखनसमयो नोल्लिखितः, परं लेखानुसारेण १३ शताब्दी सम्भाव्यते ]**

शाखासंततिसंनिरुद्धभुवनः सद्वृत्ततासंगतः प्रोद्यत्पर्वपरंपरापरिगतः प्राप्तप्रतिष्ठो भुवि ।
रत्नानां खनिरुन्नतो मुनिमतः श्रीमानृजुः प्रायशो वंशो वंशसमः समस्ति विदितः **श्रीमाल**संज्ञः परः ॥ १
तस्मिंश्चा**रुभट**श्रेष्ठिकुलाब्धिसोमसंनिभः । **शीलू**कुक्षिसरोहंसः श्रेष्ठी **सोमाभिधो**ऽभवत् ॥ २
स्वस्थश्चेतसि सस्पृहश्च यशसि प्रद्वेषवानागसि मंदो नर्मणि पापकर्मणि जडः सक्तः शुभे कर्मणि ।
साधुः साधुजने विधुः परिजने बंधुः परस्त्रीजने यो लिप्सुश्शरणे पटुर्वितरणे दक्षः क्षमाधारणे ॥ ३
**सलक्षणा**भिधा पत्नी लक्ष्मीर्विष्णोरिवाभवत् । तस्य लक्षणसंपूर्णा मधुरालापसारणिः ॥ ४

स्फुरितनयविवेको **नागपालो** विनीतो जिनमतगतशंको विद्यते तस्य पुत्रः ।
जिनपतिपदभक्तः शुद्धधर्मानुरक्तः कुमतगमविरक्तो दानदाक्षिण्ययुक्तः ॥ ५

---

* पट्टनस्थसंघवीपाडासत्कभाण्डागारे पुस्तकमिदं विद्यमानमस्ति ।

चिंतामणिः प्रणयिनां वसतिर्गुणानां लीलागृहं मधुवचो रचनांगनायाः ।
पुत्री ततः समजनि सुशीलरम्या **मोखल्लदे**व्यभिधया मतिगेहमेकम् ॥ ६
दानधर्म्मं त्रिधाऽश्रौषीदुपष्टंभाभयश्रुतात् । भक्त्या **मोखल्लदेवी**ह स्वगुरोर्मुखतोऽन्यदा ॥ ७
तत्रापि श्रुतदानस्य शुश्राव फलमुत्तमम् । तन्निदाना हि वस्तूनां हेयादेयव्यवस्थितिः ॥ ८

ततश्च—यस्य ध्याननिलीनस्य हावभावप्रकाशनैः । न चेतश्चालयंति स देव्यो रूपश्रियोद्धुराः ॥ ९
तस्य श्री**शांतिनाथस्य सोमस्य** श्रेयसे पितुः । **चरित्रं** लेखयित्वाऽदात् श्री**धनेश्वरसूर**ये ॥ १०

यस्याः क्षीरपयोनिधिर्निवसनं हारस्रजस्तारकास्ताडंके शशिभास्करौ सुरधुनी श्रीषंडपुंड्रस्थितिः ।
सा कीर्तिर्नरिनर्ति यावदमला वीरस्य विश्वत्रयी रंगे तावदमंददुंदुभितुलां धत्तामसौ पुस्तकः ॥ ११

# [ १९ ]

## प्राग्वाटकुलीन-रंभाश्राविकाप्रदत्त–कल्पसूत्र-कालकसूरिकथा–पुस्तिकाप्रशस्तिः* ।

**[ लेखनसमयो नोल्लिखितः; वर्णनानुसारेण १४ शताब्दी अनुमीयते ]**

**[ कालकसूरिकथान्ते– ]** पृषत्क ५ पक्ष २ यक्षादि १३ श्रेष्ठी **प्रद्युम्नः** कथां व्यधात् ।
प्रार्थितो **मोढगुरुणा** श्री**हरिप्रभु**सूरिणा ॥ ७४ ॥ श्रीकालिकसूरिकथा समाप्ता ॥

श्रियोगृहे **घोषपुरीयगच्छे** सूरिः **प्रमाणंद** इति प्रकृष्टः ।
बभूव पूर्वं गुणरत्नखानिः सुचारुचारित्रपवित्रगात्रः ॥ १
**विजयचंद्र**गुरो(रु) र्गुणी श्रुतमहोदधिरस्य पदेऽभवत् ।
अखिलधर्मसुकर्म्मविधायको गुरुरिव प्रतिभाति विचक्षणः ॥ २
तत्पट्टपूर्वाचलमौलिभानुर्दुर्वारमाररिपुशातनपंडितो यः ।
**श्रीभावदेवः** प्रबभूव सूरिः पदे तदीये श्रुतशीलयुक्तः ॥ ३
ततो जराभीरुजयी समस्ति **जयप्रभः** सूरिवरोऽस्यपट्टे ।
अर्कः प्रतापेन च चंद्रमासौ कलाकलापेन बुधस्तु बुद्ध्या ॥ ४

**हुडापद्रे पुरे**ऽप्यस्ति श्रीमान् **पार्श्वजिनेश्वरः** । तस्य गोष्ठीपदे ख्यातो वंश एषः प्रकीर्त्यते ॥ १
**प्राग्वाटवंशे** भुवनावतंसे विख्यातनामाजनि **चाऽऽसपालः** ।
तद्गेहिनी **जासलदेवी**नाम्नी तत्कुक्षिजातास्तनयास्त्रयोऽमी ॥ २

सर्वलक्षणसंपूर्णाः सर्वधर्मसमन्विताः । **सहदेवश्च षेताको लषमाकः** सहोदराः ॥ ३
**सहदेवस्य** च पत्न्याः **नागलदेव्याः** सुतौ शुभौ जातौ । **आंमाऽऽल्हौ** विख्यातौ धर्मधुराभारवाहने दक्षौ ॥ ४
**आमाक**पत्नी जिनधर्मतत्परा **रंभा** सुशीला सुगुणा सुवंशजा ।
तत्कुक्षिजातास्तनयास्त्रयो वरा धर्मार्थकामा इव जंगमा भुवि ॥ ५
**सुहुणा-पूणाकेन** च **हरदेव**समन्वितेन पुण्यवती । मातुः पितुः श्रियोऽर्थं प्रददौ **कल्पस्य पुस्तिका** गुरवे ॥ ६

---

* पट्टनस्थसंघवीपाडासत्कभाण्डागारे पुस्तकमिदं विद्यते ।

# [ २० ]

## श्रीमालवंशीय-श्रे० धनपाललेखित-आवश्यक-पुस्तिकाप्रशस्तिः* ।

**[ लेखनसमयो नोल्लिखितः; परं १४ शताब्दी सम्भाव्यते ]**

निश्रेयसःश्रीसदनः श्रीवरः श्रेयसेऽस्तु वः । त्रिलोकीविस्मितानंदं रसते यद्वचः सुधां ॥ १
औदार्यादिगुणग्रामरत्नै रत्नाकरोपमः । श्रीमान् **श्रीमालवंशो**ऽयं विद्यते भूमिभूषणम् ॥ २
तत्रासीद् गुणसंपूर्णः **पूर्णसिंहा**भिधः सुधीः । तस्य पत्नी **यशोदेवी** सतीवर्ग्गशिरोमणिः ॥ ३
उदयं नीतो दिनकृत् शशी च तेनेह दीपितो दीपः ।
नयनं च कृतं जगतां जिनवचनं लेखितं येन ॥ ४
इत्थमाकर्ण्य कर्णाभ्यां सुधारससरस्वतीम् । श्रीमत्**कीर्तिसमुद्रा**णां सद्गुरूणां सरस्वतीम् ॥ ५
**धनपाला**भिधानेन तयोर्ज्येष्ठेन सूनुना । अनुजस्याथ पुण्याय **महीपाल**स्य धर्मिणः ॥ ६
**आशाप्रभा**भिधानस्य गृहीतव्रतसंपदः । सूत्रमावश्यकं बंधोर्लेखितं धर्मशासनम् ॥ ७
मंगलं भवतु सर्वसज्जने मंगलं भवतु धर्मकर्मणि ।
मंगलं भवतु पाठके जने मंगलं भवतु लेखके सदा ॥ ८
प्रशस्तिः कृतिरियम**माशाप्रभ**स्य ॥ मंगलं महाश्रीः ॥

# [ २१ ]

## श्रीमालकुलजात-शोभनदेव-लेखित-शतकचूर्णि-टिप्पनक-पुस्तिकाप्रशस्तिः† ।

**[ लेखनसमयो नोल्लिखितः; १४ शताब्दी अनुमीयते ]**

**श्रीमाल**कुले विपुले जज्ञे श्रेष्ठी **यशोधनः** श्रेष्ठः । समभूत्तदीयदयिता जीवहिता **नागदेवी**ति ॥ १
सा चतुरोऽसूत सुतांश्चतुरः **श्रीवच्छ** इति ततोऽप्यन्ये ।
**सालिग-सोहिग-पासुक**संज्ञाश्च **यशोमति**श्च सुता ॥ २
इतश्च—अस्मिन्नेव सुपर्वणि वंशेऽभू**दुसभ** इति शुभः ।
तस्य **श्री**रिति जाया तयोः सुता **वेल्लुके**त्यस्ति ॥ ३
तां **सालिगो**ऽनुरूपां परिनिन्ये नयवतीं तयोस्तनयः ।
**शोभनदेवो** गुरुदेवचरणयुगकमलकलहंसः ॥ ४
स जनन्याः श्रेयोऽर्थं श्रेष्ठमतिः **शतकचूर्णि-टिप्पनके** ।
लेखयति स ततोऽदान्**महिमागणिनी**पठनहेतोः ॥ ५
भूमिर्नभः सुमेरुः सवितृशशिनौ चराचरासुभृतः । यावदिह संति लोके तावदियं पुस्तिका नन्द्यात् ॥ ६

---

* पुस्तकमिदं पत्तने संघवीपाडासत्कभाण्डागारे विद्यते ।

† ताडपत्रात्मिका पुस्तिकेयं पत्तने संघवीपाडासत्कभाण्डागारे विद्यते ।

# [ २२ ]

## श्रीमालवंशीय-श्रे० देवधर-लेखित [हेमचन्द्रीय] योगशास्त्रवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १२५१ विक्रमाब्द ]

**ग्रन्थश्लोक १२०००-संपूर्ण योगशास्त्रविवरणमिति । मंगलं महाश्रीः ।**

भृङ्गीणामिव पक्षपातललितैर्लीलागृहं सुश्रियां, सुच्छायो विततोऽतिविसयकरः **श्रीमालवंशो**ऽस्त्यसौ ।
उद्यत्पर्वमनोहरे क्षितिधरप्राप्तप्रतिष्ठोदये, यत्र च्छत्रपरम्परा ननु परा दृश्यन्त एवानिशम् ॥ १ ॥
आसीद्वंशे वरगुणगणे तत्र मुक्तानुकारी, कांत्युल्लासैर्निरुपमतमः साधुवृत्तानुसारी ।
शुद्धध्यानोपचितसुकृतो देवपूजादिनिष्ठः, श्रेष्ठी श्रेष्ठः सुनयविनयैः **सामदेवो** गरिष्ठः ॥ २ ॥
**पासिला**ख्यः सुतस्तस्मादत्यद्भुतसुवैभवात् । सुमनोवर्गमुख्योऽभूज्जयन्त इव वासवात् ॥ ३ ॥
अगण्यपुण्यलावण्या तस्य **पूनावि**नामिका । सीतेव रामचंद्रस्य जाता पत्नी पतिव्रता ॥ ४ ॥
तौ **सर्वदेव-साभा**ख्यौ तत्कुलव्योममण्डनं । जज्ञाते ज्ञातमाहात्म्यौ चन्द्रार्काविव विश्रुतौ ॥ ५ ॥
एतयोः **सोहिणी**र्भग्नी भग्नकंदर्पशासना । जिनशासनधरा जज्ञे सज्ज्ञानांभोजदीर्धिका ॥ ६ ॥
श्रेष्ठिनः **सर्वदेवस्य पार्श्वनाग**सुतोऽजनि । **लक्ष्मी**कुक्षिभवा शान्ता तस्य **स्वामिणि**रात्मजा ॥ ७ ॥
जाते सधर्मचारिण्यौ धर्मकर्मातिकर्मठे । **साभाक**स्य सदा भक्ते **वीरी-वयज**संज्ञिते ॥ ८ ॥
**वीरीका**याः सुते जाते जातिश्लाघ्ये शमान्विते । **शीता-जास्यौ** जिनाधीशधर्माराधनतत्परे ॥ ९ ॥
सत्पुत्रस्तत्र **सीताया आसदेवा**भिधोऽभवत् । ततो भूतौ सुता**वाभू-शोभनदेव**नामकौ ॥ १० ॥
अभूतां नंदनौ **जास्यास्तु वूटडि-यशोधरौ । जिंदा-यशःकुमारा**ख्यौ बभूवतुस्तयोः सुतौ ॥ ११ ॥
**वयजा**ख्या तु तत्पत्नी पंचासूत सुतोत्तमान् । कुंतीव पांडवान् पांडुयशःशुभ्रितभूतलान् ॥ १२ ॥
तेषामा**म्रप्रसादा**ख्य आद्यो **देवधर**स्ततः । **रामदेव**स्ततश्चांडू-**यशोधवल**संज्ञितौ ॥ १३ ॥
पंचाप्यद्भुतधर्मकर्मनिरताः पंचापि पुण्यांचिताः, पंचाप्युग्रभवप्रपञ्चविमुखाः पञ्चापि सत्यप्रियाः ।
एते पञ्चमहाव्रतैकरुचयः पञ्चापि शुद्धाशयाः, प्रापुः पञ्चजनौघमौलितिलकाः पञ्चापि कीर्तिं पराम् ॥ १४ ॥
अभूदा**म्रप्रसाद**स्य **सज्जनी** वरगेहिनी । ज्ञानविज्ञानयोः पात्रं तनूजः **सोहड**स्तयोः ॥ १५ ॥
जाया **देवधर**स्यासीत् श्रेष्ठिनः श्रेष्ठतानिधेः । **सांतूका**याः सुता **माहूः** शमकैरवकौमुदी ॥ १६ ॥
**आभडो नरसिंह**श्च जज्ञिरे सूनवस्तयोः । **जगदेवाख्य-लाखाक-चाहडाः** श्रुतशालिनः ॥ १७ ॥
आद्या **प्रियमति**नामा संजाता तदनु **कुमारदेवी**ति । लघ्वी त्व**विहवदेवी** वधूटिका तस्य विनययुता ॥१८॥
भार्याभूद्रा**मदेवस्य पदमी** नंदनास्त्वमी । **शंबो वयरसिंह**श्च **पुण्य**श्च **जयतूः** सुता ॥ १९ ॥
अन्यच्च—येन जिग्ये जगद्देवगुरुभक्ताखिलं भृशं । **जगद्देव**स्य तस्यासीद्दैवाद् ग्लानिकारणम् ॥ २० ॥

इतश्चतुर्भिः संबंधः—

ज्ञात्वा येन लघीयसापि सहसा स्वस्यांतकालं क्षणा-दानाय्य व्रतिनः स्वयं तदखिलं कृत्वांत्यकृत्यं स्फुटं ।
त्यक्त्वा स्नेहमशेषमात्मवदनेनोच्चार्य धर्मव्ययं, जिग्ये मोहमहामहीपतिरपि प्राज्यप्रभावोऽप्यसौ ॥ २१ ॥

---

* एतत्प्रशस्तिसमलङ्कृतं ताडपत्रमयं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितभाण्डागारे विद्यते । द्रष्टव्यम्-पिटर्सन् रिपोर्ट पुस्तक ३, पृ० ७४.

आबाल्यादपि येन पूर्णविधिना भक्त्यार्चितः श्रीजिन-स्तात्पर्यादतिसेविताः सुगुरवोऽभ्यस्तं च शास्त्रं परम्।
आत्मीयैर्विनयादिभिर्वरगुणैराचंद्रकालं कलौ, चंद्रांशूज्ज्वलकांतकीर्तिरतुला स्वल्पैर्दिनैरर्जिता ॥ २२ ॥

**योगशास्त्रवृत्तेर्देवधरेणा**त्मपुत्रसहितेन। निस्संगचित्तमुनिवत्सावद्यारंभरहितेन ॥ २३ ॥
साधुजनजनिततोषं निर्दोषं पुस्तकं प्रवरमेतत्। तस्यात्मसुतस्य **जगद्देव**स्य श्रेयसेऽलेखि ॥ २४ ॥

यद्दोषैरकलङ्कितं गुणगणैर्युक्तं मनोहारिभि-
र्नित्याभ्यासवशेन निर्वृतिकरं दिव्योक्तसाधुक्रियम्।
श्रीभूपाल**कुमारपाल**सहितं श्री**हेमचन्द्र**प्रभोः,
कर्मव्याधिविबाधकं विजयतां तद् **योगशास्त्रं** सदा ॥ २५ ॥

सूर्याचन्द्रमसोर्यावद् द्योतयन्ते भुवं रुचः। अश्रान्तं पुस्तकं तावत् कोविदैर्वाच्यतामिदम् ॥ २६ ॥

स्वस्ति श्री**विक्रमनृपतः संवत् १२५१ वर्षे कार्तिकसुदि १२ शुक्रे** रेवती नक्षत्रे सिद्धयोगे महाराजश्री**भीमदेव**विजयिराज्ये अवनिवनिताप्रशस्तकस्तूरिकातिलकायमान**लाटदेशा**लंकारिणि सकलजनमनोहारिणि विविधधार्मिकविराजमान**दर्भवती**स्थाने **श्रीमालवंशीय** श्रे० **साभा**नंदनेन जगदानंदनेन निर्मलतमसम्यक्त्वधरेण श्रे० **देवधरेण** सकलधर्मकर्मावहितेन ठ० **आमड-नरसिंहा**दिसुतसहितेन निजपुत्र**जगद्देव**श्रेयोनिमित्तं श्री**वटपद्रकपुर**प्रसिद्धप्रबुद्ध पं० **केशव**सुत पं० **वोसरि**हस्तेनाशेषविशेषज्ञानवतश्चमत्कारकारीदमप्रतिमप्रतापश्रीजिनशासनप्रभावकश्री**कुमारपाल**भूपालविधापितस्य श्री**हेमचन्द्रसूरि**विरचितस्य **योगशास्त्रवृत्ति**पुस्तकं लिखितमिति ॥

**॥ मंगलं महाश्रीः। शुभं भवतु लेखकपाठक-वाचकानामिति ॥**

# [ २३ ]

## प्राग्वाटवंशीय-नाऊश्राविका-लेखित-जयन्तीवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १२९१ विक्रमाब्द ]

दिव्यश्रीसदनं सदा क्षितिधराधारः सुपात्रास्पदं, क्षोणीमंडलमंडनं सुविदितः **प्राग्वाटवंशो**ऽस्ति सः।
यत्र च्छत्रपरंपरावति तते संप्राप्य पर्वस्थितिं, जायंतेऽद्भुतमत्र वांछितफलैः सौहित्यभाजो जनाः ॥ १ ॥
मुक्तावत्तत्र वंशे समजनि विदितो **धाहडः** श्रेष्ठिवर्यः, सद्वृत्तः कांतकांतिः प्रवरगुणगणः प्रास्तनिःशेषदोषः।
आनंदाधायिमूर्त्तिस्त्रिभुवनभवनोत्संगरंगत्सुकीर्त्तिः, स्फूर्जत्पुण्यप्रवाहोद्भववशविलसत्प्राभवत्स्फूर्त्तिमूर्त्तिः ॥ २ ॥
नयविनयविततिविटपितसितांशुसितकीर्त्तिधवलितदशाशः। पुण्याचारपवित्रस्तत्पुत्रो **धवल**नामासीत् ॥ ३ ॥
अजनीह **मरु**संज्ञा मरुस्थली पापपंकजवनस्य। तस्य प्रवरा जाया विशुद्धशीला विगतमाया ॥ ४ ॥
तत्पुत्री ठक्कुराणी समभवदसमक्षांतिविस्तीर्णशीला, **नाऊ**नामा शशांकद्युतिधवलितगुणैः साधुशस्यैर्विशाला।
धर्मानुष्ठाननिष्ठा विधिवशविकसत्कीर्त्तिसंभारसारा, प्राज्यस्फूर्जद्विवेकप्रतिहतविततोद्दामदुर्वारमारा ॥ ५ ॥

इतश्च—

संजातोऽत्रैव वंशे निरुपममहिमा भाग्यसौभाग्यभूमिः, **श्रीपाल**ष्ठक्कुराग्र्यः प्रथितशुचियशाः पालितप्राग्र्यनीतिः।
दिव्यश्रीकेलिगेहं समजनि परमं मंडनं धाम लक्ष्म्याः, **श्रीदेवी** तस्य पत्नी विकृतिकलुषतालोलतानां सपत्नी ॥ ६ ॥

* एतत्प्रशस्तिसमन्वितं ताडपत्रमयं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिररक्षितभाण्डागारे विद्यमानमस्ति। द्रष्टव्यम्—पिटर्सन् रीपोर्ट-पुस्तक ३, पृ० ४३–४५।

तयो सुतः **शोभनदेव**नामा मुख्यो **यशोदेव** इति द्वितीयः ।
जातोऽभिजातो नृपमान्यतादिगुणैरशेषैर्भुवि सुप्रसिद्धः ॥ ७ ॥

तत्र **शोभनदेव**स्य ठक्कुरस्य गृहद्वयम् । **सूहव-महणू**संज्ञं **सोढू**नामा सुता पुनः ॥ ८ ॥
**नाऊ**कायाः पाणिग्रहणं कृतवानसौ **यशोदेवः** । तत्रातिरत्नभूतेति **रत्नदेवी**ति विदितेयम् ॥ ९ ॥
या शीतेव कलौ कलंकविकलप्रोल्लासिशीलोज्ज्वला, धर्मानुष्ठितिनिष्ठया त्रिभुवने प्राप्तप्रतिष्ठा हि या ।
लब्धागण्यवरेण्यपुण्यनिवहा या चैत्यकृत्यादिभि-र्ग्लानास्थानपुरादिधार्मिकसभाप्रख्यातनामा च या ॥ १० ॥

ज्ञानं मोहमहांधकारदलने रत्नप्रदीपायते, ज्ञानं दुर्गतिदुर्गकूपपतने हस्तावलंबायते ।
गंभीरे भववारिधौ भवभृतां ज्ञानं सुपोतायते, ज्ञानं कामितवस्तुलाभविषये सत्कामधेनूयते ॥ ११ ॥

इत्येवं शुभदेशनां बहुविधां श्रुत्वा गुरूणां मुखा-द्देषा दोषपराङ्मुखी जिनमते रक्ता विरक्ता भवे ।
सप्तक्षेत्रनिजार्थबीजवपनासक्ता विशेषात्पुन-र्नानापुस्तकलेखने कृतमतिर्नाऊरिह श्राविका ॥ १२ ॥

इतश्चतुर्भिः संबंधः—

श्री**शीलगण**सूरीशपूज्यपट्टप्रतिष्ठितैः । बाल्यादपि महापुण्यश्रेण्या नित्यमधिष्ठितैः ॥ १३ ॥
श्री**मानतुंग**सूरिभिराराध्यैस्तत्र **यज्जयंत्याख्यम्** । प्रकरणमकारि शुभदं भगवत्यंगान्मनोहारि ॥ १४ ॥
तस्योपरि गुरुभक्त्या विदधे सुधिया मनोरमा वृत्तिः । श्री**मलयप्रभ**सूरिभिरिह या पूज्यैः प्रसन्नतमैः ॥ १५ ॥
तामिह सा **नाऊका** ज्ञानाराधनधिया सुगुरुभक्त्या । लेखितवती गुणवती महासती शुद्धशुभभावा ॥ १६ ॥

यावच्चारुमरीचिसंचयचिते चंद्रार्कयोर्मंडले, राजेते गगनश्रिये मणिमये दिव्ये चलत्कुंडले ।
ताराश्रेणिरियं पुनः सुकुसुमालंकारशोभावहा, तावत्पुस्तकमेतदद्भुततमं व्याख्यायतां सूरिभिः ॥ १७ ॥

स्वस्ति श्री**विक्रमनरेंद्रसंवत् १२६१ वर्षे अश्विनवदि ७ रवौ** पुष्यनक्षत्रे शुभयोगे श्रीम**दणहिलपाटके** माहाराजाधिराजश्री**भीमदेव**कल्याणविजयराज्ये प्रवर्त्तमाने श्री**प्राग्वाटज्ञातीय**श्रेष्ठि**धवल-मरू**पुत्र्या ठ० **नाऊ**श्राविकया आत्मश्रेयोर्थं पंडित**मुंजाल**हस्तेन **मुंकुशिका**स्थाने **जयंतीवृत्तिपुस्तकं** लेखयित्वा श्री**अजितदेव**सूरीणां निजभक्त्या समर्पितमिति ॥ शुभं भवतु ॥ मंगलमस्तु ॥ मंगलं महाश्रीः ॥

# [ २४ ]

## गूर्जरश्रीमालवंशीय-आंबड-पाल्हणभ्रातृद्वयलेखित [ वर्द्धमानाचार्यकृत ] ऋषभदेवचरित्रपुस्तकप्रशस्तिः* ।

[ लेखनकाल १२८९ विक्रमाब्द ]

**संवत् १२८९ वर्षे माघवदि ६ भौमाव**द्येह श्री**प्रल्हादनपुरे** समस्तराजावलीसमलंकृतमहाराजाधिराज श्री**सोमसिंहदेव**कल्याणविजयराज्ये श्री**ऋषभदेवचरित्रं** पंडि० **धनचंद्रेण** लिखितमिति ॥ मंगलं महाश्रीरिति भद्रम् ॥

हृद्यप्रोद्यदखर्वपर्वसुभगः सच्छायायाऽलंकृतः, सद्वृत्तोज्ज्वलमर्त्यमौक्तिकमणिर्भूभृत्प्रतिष्ठोन्नतः ।
प्रेंखत्पत्रपरिष्कृतः परिलसच्छाखावृतो **गूर्जरः, श्रीमाला**भिध इत्युदारचरितः ख्यातोऽस्ति वंशः क्षितौ ॥ १ ॥

---

* ताडपत्रात्मकं पुस्तकमिदं पत्तने संघसत्कभाण्डागारे विद्यते । द्रष्टव्यम्–पिटर्सन् रीपोर्ट पुस्तक ५, पृ० ८१

वंशे तत्र बभूव मौक्तिकसमः सद्वृत्तशैत्याश्रितः, ख्यातो **लल्लकभांडशालिक** इति स्वच्छस्वभावान्वितः ।
चित्रं छिद्रसमुज्झितोऽपि नितरां भूत्वा गुणानां पदं, विश्वप्राणिहृदि व्यधत्त वसतिं यच्छद्मवंध्याशयः ॥ २ ॥
तस्याभूल्ललना नाम्ना **लल्लिका**भांडशालिनी । शीलमुक्तावली कंठे यया दध्रे समुज्ज्वला ॥ ३ ॥
संततस्तयोस्त्रयः पुत्राः पवित्राश्चरितैः शुभैः । अजायंतागारभारोद्धारधुर्यत्वविश्रुताः ॥ ४ ॥
तेषां जविष्ठोऽजनि भांडशाली ख्यातो गुणैर्**लोलक**नामधेयः । श्रीमज्जिनाज्ञाकरणप्रतिज्ञाविभूषणं वक्षसि यस्य जज्ञे ॥५॥
शुद्धात्माऽजनि भांडशालिक**यशश्चन्द्रा**भिधानोऽपरः, श्रीमद्देवगुरुप्रयोजनविधौ बद्धादरोऽनारतं ।
येनौदार्यगुणैरनर्गलतरैरावर्य विश्राणिता, पात्रेषु स्थिरता प्रवर्त्तनकृते लक्ष्मीर्मनःस्वीच्छया ॥ ६ ॥
ततोऽभवद्**देवकुमार**नामा सुतो गुणैर्देवकुमारमूर्त्तिः । प्रवर्त्तयन्निःकपटं जिनानां वर्यां सपर्यामवदातचित्तः ॥ ७ ॥
**लोलाक**स्याभवद्भांडशालिनो भांडशालिनी । **लक्ष्मी**रित्यभिधानेन जिनपूजापरायण ॥ ८ ॥
भांडशालिनो द्वौ पुत्रौ **लोलाक**स्य बभूवतुः । **धंधूका**भिधः प्रथमः श्रीमदाद्यजिनार्चकः ॥ ९ ॥
**वाहिनी** गेहिनी तस्य बभूव प्रियवादिनी । **यशोवीर**स्तयोः पुत्रः सुशीला **सिंधुका** सुता ॥ १० ॥
धर्मोच्छृंखलभांडशालिक**यशश्चंद्र**स्य दानप्रिया, नित्यौचित्यविनीततार्जवगुणालंकारशृंगारिता ।
वर्यौदार्यगुणैर्विवेकविशदैर्दूरं यया रंजिता, आत्मन्यप्रतिमप्रमोदपरतां नीताः समस्ता जनाः ॥ ११ ॥
सा जज्ञे गेहिनी नाम्ना **जिंदिका** भांडशालिनी । सुकृतोपार्जिका श्रीमद्देवसद्गुरुपूजया ॥ १२ ॥
**यशश्चंद्र**स्य जज्ञाते द्वेऽपत्ये भांडशालिनः । स्वगृहश्रियः सीमंतमौक्तिकतिलकोपमे ॥ १३ ॥
आद्या पुत्री समजनि वरा **राजिका** नामधेया, मंदाकिन्युल्लसितलहरीशीलसंभूषितांगी ।
यस्या अंतःकरणमृदुतासंगतं जंतुजातं, लक्ष्मीः साक्षादिव निजगृहे जंगमा याऽवतीर्णा ॥ १४ ॥
ठक्कुर**शोभनदेव**स्तामथो परणीतवान् । संतोषभूषिता जाता **संतोषा**ख्या तयोः सुता ॥ १५ ॥
श्रीसर्वज्ञपदांबुजार्चनरतिः संप्राप्तपुण्योन्नतिः, किंचिन्मीलितमालतीदलभरस्वच्छेऽतिशीले मतिः ।
भक्त्यावेशसमुल्लसद्गुरुनतिर्विस्तीर्णदानस्तति-र्निच्छद्मैकतपोविधानवसतिर्यस्या गुणैः संगतिः ॥ १६ ॥
दाक्षिण्योदधिभांडशालिक**यशश्चंद्र**स्य पुत्रोऽपरो, धर्मोद्दामनराग्रणीरिह **यशःपाला**भिधः शुद्धधीः ।
पण्यस्यापि न केवलैव महती भांडस्य शाला कृता, श्रीआद्यं वरिवस्यतां जिनपतिं येनात्र धर्मस्य च ॥ १७ ॥
भांडशालि**यशःपाल**स्याभवज्**जयदेविका** । औदार्यशीलप्रमुखैः प्रेयसी श्रेयसी गुणैः ॥ १८ ॥
अभवंस्तयोस्तनूजाः सच्चरित्रास्त्रयो गुणैः । आनंददायिनः पित्रोरन्योन्यं प्रीतिशालिनः ॥ १९ ॥
आद्यः सुतः संश्रितधर्म्मकर्म्मा विवेकवेश्माजनि **पार्श्वदेवः** ।
अभ्यर्थन······भीरुः प्रकल्पितश्रीजिननाथसेवः ॥ २० ॥
अन्यो बभूवां**बड**नामधेयः कस्याप्यसंपादितचित्तपीडः ।
स्वकीयसंतानधराधुरीणः स्ववेश्मलक्ष्मीहृदयैकहारः ॥ २१ ॥
सर्वौचित्याचरणनिपुणः प्रीतिपूर्वोभिलापा··············
·················तार्तीयीकस्तदनु तनुजः **पाल्हणा**ख्यो बभूव ॥ २२ ॥
**पार्श्वदेव**स्य संजज्ञे **पद्मश्री**नामिका प्रिया । यस्याः पतिव्रतात्वेन स्वकुलं निर्मलीकृतम् ॥ २३ ॥
अथां**बड**स्योचितकृत्यदक्षा **मंदोदरी** नाम बभूव पत्नी ।
स्फुरद्विवेकोज्ज्वलसारहारा स्वमंदिरे मूर्त्तिमतीव लक्ष्मीः ॥ २४ ॥
हरेरिव भुजादंडाश्चत्वारस्तनयास्तयोः । अजायंत सदाचारगृहभारधुरंधराः ॥ २५ ॥

प्रथमोऽजनिष्ट तेषां **पार्श्वकुमारा**भिधो गुणैः प्रथमः । विनयद्रुमालवालः पित्राज्ञापालनप्रवणः ॥ २६ ॥
बभूव प्रेयसी तस्य **पृथ्वीदेवी**ति नामतः । विनीतविनया नित्यमौचित्यप्रियकारिणी ॥ २७ ॥
तदनु तनयो द्वितीयः समजनि **धनसिंह**नामको विनयी । निर्म्मलकलाकलापत्रैणक्रीडाद्रिरभिरामः ॥ २८ ॥
नाम्ना **धांधलदेवी**ति संजज्ञे तस्य गेहनी । पुण्यार्जवार्जितश्लाघा श्लाघ्यकर्म्मभिरंजिका ॥ २९ ॥
ततस्तृतीयोऽजनि **रत्नसिंहः** संतापकारिव्यसनेभसिंहः । दूरं परित्यक्तविरुद्धसंगः श्रीमज्जिनेंद्रक्रमपद्मभृंगः ॥ ३० ॥
तस्याजनिष्ट दयिता नाम्ना **राजलदेविका** । **पेथुका**ख्या तयोः पुत्री समस्तानंददायिनी ॥ ३१ ॥

अनन्यसौजन्यजनानुकीर्णो विवेकलीलोज्ज्वलचित्तवृत्तिः ।
सार्वत्रिकौचित्यनिधिप्रवीणो जज्ञे **जगत्सिंह**सुतश्चतुर्थः ॥ ३२ ॥

पत्नी **जाल्हणदेवी**ति नाम्ना तस्य समजनि । कुत्राप्यनुत्सेकवती प्रदानविनयान्विता ॥ ३३ ॥
**सोल्लुका**ख्या ततः पुत्री बभूव प्रियवादिनी । यस्याः शीलजलैः शुद्धैः पुण्यवल्ली प्रवर्द्धिता ॥ ३४ ॥

पत्नी ततोऽजायत **पाल्हण**स्य माणिक्यमालास्फुरदंशुशीला ।
जिनोपदेशश्रुतिकर्णसारा कृपाप्रपा **माणिकि**नामधेया ॥ ३५ ॥

समजनि तयोस्तनूजो **वरणिग**नामा समस्तगुणपात्रम् । निखिलस्वकुलैकधुराधुरंधरः सितमधुरभाषी ॥ ३६ ॥
बभूव प्रेयसी तस्य **धनदेवी**ति विश्रुता । दाक्षिण्योज्ज्वलशीलेन सर्वेषां मोददायिनी ॥ ३७ ॥
अजायंत ततस्तिस्रः शीलालंकरणाः सुताः । **कर्पूरदेवी-भोपलदेव्यौ वील्हणदेव्य**पि ॥ ३८ ॥
अभूद्**देवकुमार**स्य प्रेयसी **छडिका**भिधा । पतिव्रता समाचारचातुर्यार्जितसद्यशाः ॥ ३९ ॥
**कुमारपाल**सुतोऽभूत् पितुराज्ञोद्यतस्तयोः । जिनशासनानुरागी विरागी दोषवस्तुषु ॥ ४० ॥
विवेकरविरन्येद्युः स्फुरति स्मातिनिर्म्मलः । संतोषाय मानसाद्रेर्विद्रावितत्तमस्ततिः ॥ ४१ ॥

धातत्रस्ततुरंगमांगतरलाः संपत्तयोत्यूर्जिताः, लुभ्यल्लुब्धकबिभ्यदर्भकमृगीदृग्चंचलं यौवनम् ।
चंचत्प्रेमतडिल्लताद्युतिचलं चैतत्तथा जीवितं, मत्वैवं जिनधर्मकर्म्मणि मतिः कार्या नरैः शाश्वते ॥ ४२ ॥

सोऽनंतसुखनिदानो धर्मोऽपि ज्ञायते श्रुतात् । श्रुतं च पुस्तकाधीनं तत्कार्यः पुस्तकोद्यमः ॥ ४३ ॥
पुस्तकं लेखयामास स्वसुः श्रेयोर्थ**मांबडः । संतोष**नाम्न्याः स्नेहेन **पाल्हण**भ्रातृसंयुतः ॥ ४४ ॥

प्रोद्यन् यावदसौ बिभर्त्ति तपनः प्राचीपुरंध्रीमुखे, कांतिव्यक्तदिशं सुवर्णतिलकश्रीसंनिभं विभ्रमम् ।
श्रीनाभेयजिनस्य चारु चरितं तावत्कथाश्चर्यकृ-त्स्वन्द्यादत्र विचार्यमाणमनघप्रज्ञैः सदा सौविदैः ॥ ४५ ॥

# [ २५ ]

## धर्कटवंशजात-निर्मलमतिगणिनी-लेखित-योगशास्त्रवृत्तिपुस्तिकाप्रशस्तिः* ।

[ लेखनकाल १२९२ विक्रमाब्द ]

आसीच्चंद्र**कुलांबरै**कतरणिः श्री**मानदेवा**भिध-स्तद्वंशे प्रभु**मानतुंग**गणभृत् प्राज्यप्रभावः प्रभुः ।
तत्राजायत **बुद्धिसागर**गुरुः **प्रद्युम्नसूरि**स्तत-स्तच्छिष्योऽजनि **देवचंद्र**गणभृद् गच्छाग्रणीर्विश्रुतः ॥ १ ॥

श्री**देवचंद्र**स्य मुनीश्वरस्य जातौ सुशिष्यौ जगति प्रशिष्यौ ।
श्री**मानदेवः** प्रथमो गणेशः श्री**पूर्णचंद्रो** गणभृत्तथान्यः ॥ २ ॥

---

* एतत्प्रशस्तिसहितं ताडपत्रात्मकं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरभाण्डागारे विद्यते ।

यः सैद्धांतिकमौलिभूषणमणिर्विद्वज्जनाग्रेसरः, संतोषोत्तमरत्नरंजिततनुः श्री**मानदेव** प्रभुः । यच्चेतः कल्यापि नो विलिखितं सल्लापलीलावती-वेल्लल्लोचनचारुवीक्षितस(श)रश्रेणीभिरात्मोद्भवः ॥ ३ ॥ श्री**पूर्णचंद्र**सूरेर्गौर्वादिगोवृंदनाशिनी । ब्रह्मनिष्ठोऽपि सोऽव्याद्वो यासूत परमं वृषम् ॥ ४ ॥ श्री**मानदेव**सूरेः पट्टेऽजनि **मानतुंग**सूरिगुरुः । विधिरिव भवांतकारी नरकद्वेषी स विष्णुरिव ॥ ५ ॥

अन्यच्च – **धर्कटवंश**सुधानिधिचंद्रः श्रेष्ठी **गणियाको** निस्तंद्रः ।
तस्य **गुणश्रीः** समजनि जाया दक्षसुतेव सदैव विमाया ॥ ६ ॥
तस्यांगजैका सुमहत्तरायाः **प्रभावती**संज्ञमहत्तरायाः ।
पार्श्वेऽगृहीत् पंचमहाव्रतानि **प्रद्युम्नसूरेः** सुगुरोः करेण ॥ ७ ॥

**जगश्रीरुदयश्री-श्रीचारित्रश्री**महत्तराः । क्रमेण तासां सर्वासां पादपद्ममधुव्रता ॥ ८ ॥ सा **निर्मलमतिगणिनी** रम्यां श्री**योगशास्त्र**सद्वृत्तेः । द्वैतप्रकाशखंडस्य पुस्तिकां लेखयामास ॥ ९ ॥ श्री**मानतुंगसूरेः** पट्टस्थित**पद्मदेवसूरीणाम्** । तां प्रवचनरसपात्रां प्रददौ पुण्याय पुण्यतराम् ॥ १० ॥

**संवत् १२९२ वर्षे कार्तिक शुदि ८ रवौ** धनिष्ठानक्षत्रे योगशास्त्रवृत्तिर्द्वितीयप्रकाशस्य लिखितेति ॥ शुभं भवतु ॥

# [ २६ ]

## दीशापालान्वय-श्रे०वीरलेखित-ज्ञाताधर्मकथादिषडङ्गीवृत्तिपुस्तकप्रशस्तिः* ।

[ लेखनकाल १२९५ विक्रमाब्द ]

**सम्वत् १२९५ वर्षे चैत्रसुदि २** मङ्गलदिनेऽद्येह श्री**मदनहिल्लपाटके** महाराजश्री **भीमदेव**विजय-कल्याणराज्ये ज्ञाताधर्मकथाङ्गप्रभृति षडङ्गी सूत्रवृत्तिपुस्तकं लिखितम् ॥

अस्ति विस्तारवानुर्व्यामच्युतश्रीसमाश्रमः । नदीनसत्त्वसम्पूर्णो **दीशापाला**न्वयार्णवः ॥ १ ॥ तस्मिन् **देउक**नामा त्रासविहीनोऽभवत्पुरुषरत्नं । **विजयमति**रस्य पत्नी बभूव धर्मैकनित्यमतिः ॥ २ ॥

तयोरभूतां तनयौ नयान्वितौ निजान्वयव्योममृगाङ्कभास्करौ ।
**सोल्लाक-वील्लाक** इति प्रसिद्धौ **प्रादू**श्च पुत्री **धनपाल**माता ॥ ३ ॥

**सोल्लाक**स्याभवत्पत्नी **मोहिणी**ति तयोः सुतः । **महणाख** इति ख्यातः सम्यक्त्वे निश्चलाशयः ॥ ४ ॥ **वील्हाक**सत्का दयिता दयाढ्या **सोषूः** सदाचार विचारचारुः । सच्चिन्त्यसंसारमसारमेषा धर्मार्थमर्थव्ययमाततान ॥ ५ ॥ पुरुषार्था इव भूताश्चत्वारो नन्दनास्तयोर्जाताः । कर्तुमिव तुल्यकालं जिनोक्तधर्मं चतुर्भेदम् ॥ ६ ॥ प्रथमस्तत्र **जयन्तो वीरा**ख्यस्तदनु तदनु **तिहुणाह्वः** । **जाल्हण**नामा तुर्यः पञ्चत्वं प्राप तत्राद्यः ॥ ७ ॥ **वीर**स्ततोऽन्यदाऽश्रौषीत् शोकशङ्कुविनाशकं । श्री**जगचन्द्र**सूरीणां वचः सर्वज्ञभाषितम् ॥ ८ ॥

तद्यथा – चला समृद्धिः, क्षणिकं शरीरं; बन्धुप्रबन्धोऽपि निजायुबद्धः ।
भवान्तरे संश्चलितस्य जन्तो-र्न कोऽपि धर्मादपरः सहायः ॥ ९ ॥
कुबोधरुद्धे भुवने न बुध्यते, स्फुटं जिनेन्द्रागममन्तरेण ।
कलौ भवेत्सोऽपि न पुस्तकं विना, विधीयते पुस्तकलेखनं ततः ॥ १० ॥

---

* ताडपत्रात्मकं एतत्पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यते ।

स्वभ्रातुः श्रेयसेऽलेखि ततस्तेन सबन्धुना । **ज्ञाताधर्मकथा**ङ्गादिषडङ्गी वृत्तिसंयुता ॥ ११ ॥
**जंघराला**भिधस्थाने युगादिजिनमन्दिरे । सङ्घस्य पुरतो व्याख्यातैषा **देवेन्द्रसूरि**भिः ॥ १२ ॥
–**सं० १२९७ वर्षे** व्याख्यातमिति ॥

# [ २७ ]

## पल्लिपालवंशीय-श्रेष्ठिलाखण-लेखित-समरादित्यचरित-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १२९९ विक्रमाब्द ]

वंशः श्री**पल्लिपालो**ऽस्ति सशाखः सत्पर्ववान् । भूभृतोऽप्यधरीचक्रे येनैकच्छत्रितात्मना ॥ १ ॥
अजनि विनयपात्रं तत्र पुंरत्नचूडा-मणिरमलिनकीर्तिः **साढदेवा**भिधानः ।
निरुपमजिनराजस्मेरपादारविंदा-ऽविचलविहितसेवावाप्तविश्वप्रतिष्ठः ॥ २ ॥
शीलव्रतदृढा **साढू**संज्ञिता तस्य वल्लभा । जिनक्रमयुगांभोजे यन्मनो हंसकायते ॥ ३ ॥
भ्राताऽभूत् **साढदेवस्य दोसलः** सत्यशालिनः । **पदमी**नामधेयाथ प्रिया तस्य विवेकिनी ॥ ४ ॥
आसीत् श्रेष्ठिक**साढदेव**तनुभू**र्जाजाक**नामा जिन-श्रेणिध्याननिशाणशोणितमतिप्राकाश्यनश्यत्तमाः ।
शश्वद्यस्य यशःप्रसूनमसमं राकानिशानायक-ज्योतिःक्षालितनिर्मलांबरतलामोदाय यज्जातवान् ॥ ५ ॥
जाया तस्य **जयत्तुका** समभवद्दीनानुकंपारसा-ऽऽसारासिक्तविवेककंदलवनप्रस्तारबद्धादरा ।
नित्यध्यातजिनेश्वरांघ्रिनखरुग्ध्वस्तांधकारांकुरो, यस्याश्चित्तगृहोदरे प्रतिपदं धर्मः सुखं खेलति ॥ ६ ॥
पुत्रो **लाषण**संज्ञितोऽजनि तयोः पुण्यैकपात्रं कृती, नीतिज्ञो विनयी नयी सुकुलजो दक्षः क्षमादक्षिणः ।
येनोत्तुंगनिजान्वयाह्वयमहाप्रासादमूर्ध्नि स्फुटं, दिग्विस्तारियशःसुकेतनपटः प्रस्तारयामासिवान् ॥ ७ ॥
**जाजाक**स्याभवद्भ्राता **जसपाला**भिधः सुधीः । **संतुका**संज्ञिता तस्य दयिता दानशालिनी ॥ ८ ॥
जातौ तयोः सुतौ **रत्न-धर्नसिंहा**भिधावुभौ । भगिनी **नाउका** नाम्नी बभूवाम्नायभूषणं ॥ ९ ॥
जायाऽजायत **लाषण**स्य कुलजा दानोद्यता **रुक्मिणी,** नाम्ना दीनसुवच्छलाऽवयविनी पुण्येंदिरा मंदिरे ।
यस्या मानसपंकजं त्यजति नो पक्षद्वयीनिर्मलो, धर्मो हंसयुवा युतो वरलया तीर्थेशभक्त्याख्यया ॥ १० ॥
**नरपति**रिति नामा **लाषण**स्यांगजन्मा, तदनु **भुवनपाला**ख्यो **यशोदेव**संज्ञः ।
क्रमश इह तनूजा जज्ञिरे तस्य तीर्था-ऽधिपतिसुगुरुपूजालब्धलक्ष्मीविकाशाः ॥ ११ ॥
**जाल्हणदेवी**ति सुता **जासी**नामा तथापरा पुत्री । सद्धर्मकर्मनिपुणा क्रमादिमा दुहितरोऽभूवन् ॥ १२ ॥
आसीत्कुलीनचरिता **नायिकदेवी**ति नरपतेर्दयिता । अपरा च **गौरदेवी** तनुभूः **सामंतसिंहा**ख्यः ॥ १३ ॥
प्रिया **भुवनपाल**स्य **पउंदेवी**ति संज्ञिता । बभूव भाग्यभूः शीलरत्नरत्नाकरावनिः ॥ १४ ॥
**यशोर्णव**स्य पत्नी **सोहरा**संज्ञा पतिव्रता जज्ञे । तस्याः समभवत्पुत्रः **सांगण**नामा स्फुरद्धामा ॥ १५ ॥
मातुस्तातो **राजपाला**भिधानो, मातुर्माता यस्य **राणी**ति नाम्नी ।
मातुर्भ्राता **राणिगो बूटडि**श्च, मातुः पक्षो **लाषण**स्येत्थमुक्तः ॥ ६ ॥
श्रीमज्जिनेशप्रभुहस्तपद्मा-धिवासतो **लाषण**नामधेयः । तीर्थेशयात्रादिककर्मनिर्मलः, कुलप्रदीपः सुजनोपकारी ॥ १७ ॥
अथान्यदा **लाषण** एष हृष्टः, सुदृष्टशास्त्रार्थविनीतचेष्टः । भवस्वरूपं क्षणदृष्टनष्टं, विभावयामास निशावसाने ॥ १८ ॥

---

* एतत्प्रशस्तिसमन्वितं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिर-भाण्डागारे विद्यते । द्रष्टव्यम्, पिटर्सन् रीपोर्ट पुस्तक ३, पृ० ११८

प्रातः प्रयातः सुगुरोः समीपे, तदेव तत्रैव तथा निशम्य ।
ततः प्रबोधार्कसुदृष्टवस्तुना, समाधिना ध्यायति सर्वमप्यदः ॥ १९ ॥

तथाहि–

देहं दुःखैकगेहं जलनिधिलहरीचंचलं जीवितव्यं, संपत्तिः प्राणभाजां प्रसृमरपवनोद्धूतकेतूपमेया ।
सौंदर्यं सुभ्रुनेत्रांचलल्लुलितसमं बंधुसंगोऽप्यनित्यो, जैनं धर्मं विनान्यन्नहि मनुजभवे शाश्वतं किंचिदस्ति ॥ २० ॥
दानशीलतपोभावभेदैर्धर्मश्चतुर्विधः । मुख्यतो यतयो दानमेवैकं संप्रचक्ष्यते ॥ २१ ॥
यद्यपि त्रिविधं शास्त्रं तद्दानं ननु विश्रुतम् । तथापि ज्ञानदानाख्यो दानमन्यत्प्रशस्यते ॥ २२ ॥
ज्ञानं श्रुताश्रितं प्रोक्तं श्रुतं शास्त्रमिति स्मृतम् । तच्च द्विधा समाख्यातं कल्पिता-चरितक्रमात् ॥ २३ ॥
तद्द्वयोर्द्योतितं किंचिच्चरितं सुनिरूपये । इति चिंतयतस्तस्य स्मृतिगोचरतां गतम् ॥ २४ ॥
चरित्रं **समरादित्य**भूभुजः प्रशमास्पदम् । संसारिजीववैराग्यरसनिस्यंदभाजनं ॥ २५ ॥
द्वेषव्याघ्रहुताशनं शमधुनीपूर्णार्णवं दुर्णय-ध्वांतध्वंसनभास्करं कलिमलप्रक्षालनैकामृतम् ।
एतत्सच्चरितं सुचारु **समरादित्य**क्षितुः शास्त्रतो, बद्धं श्री**हरिभद्रसूरि**गुरुणा संवेगसंगाय नः ॥ २६ ॥
यदिष्टं वस्तु संसारे तदिष्टेषु नियोज्यते । अन्यदिष्टं हि नो दृष्टं मातरं पितरं विना ॥ २७ ॥

इति मातृ**जयतुका**या निजपितृ**जाजा**ह्वयस्य पुण्याय ।
**समरादित्यचरित्रं** विलेखितं **लाषणे**नैतत् ॥ २८ ॥

येन द्रव्यमुपार्जितं शुभवशादेकांतवीरेण तत्, क्षेत्रे सप्तमिते निवेश्य विहिता सद्वृत्तिरूपा वृतिः ।
तत्सीम्नि प्रकटो जिनेशसुगुरोरादेशतः शाश्वतो, जैनः श्री**समरार्कपुस्तक**तया घाटः समारोपितः ॥ २९ ॥

**नंदं[9]-नव[9]-भानु[12]वर्षे** पित्रोः सुकृताय **लाषणः** कुलजः ।
**समरादित्यचरित्र**व्याख्यानं कारयामास ॥ ३० ॥

यावन्नालति नागराट् नलिनति क्षोणीतलं दिग्ततति-र्यत्र स्तोमति केसरत्यहिमरुक् किंचांबरं भृंगति ।
तावत्तत्**समरार्कभूपचरितं** चैतन्यविस्तारकं, श्रोतॄणां समसंपदं वितनुतां व्याख्यायमानं बुधैः ॥ ३१ ॥
नंदं[9]-नवं[9]-भानु[12]वर्षे श्री**रत्नप्रभसूरि**णा शुभध्यानात् । श्री**स्तंभतीर्थ**नगरे व्याख्यातं कार्तिके मासि ॥ ३२ ॥

# [ २८ ]

## धर्कटवंशीय-श्रेष्ठिकटुक-लेखित-[ नेमिचन्द्रसूरिकृत ] उत्तराध्ययनसूत्रलघुवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १३०८ विक्रमार्क ]

**सं० १३०८ वर्षे ज्येष्ठ वदि ७ बुधे** ॥ नमो जिनागमाय ॥

प्रशस्यधर्मप्रभवः सुपर्वा विशालशाखो वरपत्रशोभः ।
महीभृतां मौलिषु माननीयः श्री**धर्कटा**नां प्रथितोऽस्ति वंशः ॥ १ ॥

---

* एतत्प्रशस्तिसमन्वितं ताडपत्रमयं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितभाण्डागारे विद्यते । द्रष्टव्यम्–पिटर्सन् रीपोर्ट पुस्तक ३, पृ. ८६–८९ ।

**साढाक**नामा सुविशुद्धमध्यस्त्रासादिदोषैः परिवर्जितश्च ।
अजायतास्मिन्कुमुदावदातो मुक्तामणिर्भास्वरकान्तिदीप्रः ॥ २ ॥
समुद्र इव गम्भीरः शशाङ्क इव शीतलः । दानवर्षी राज इव **साढाकः** श्रावकोऽभवत् ॥ ३ ॥
**साढा**कस्य सुताः पञ्च जज्ञिरे पाण्डवा इव । येऽर्थिसंघातजातानां कौरवाणां क्षयं व्यधुः ॥ ४ ॥
सर्वेऽपि धर्मरसिकाः सर्वेऽपि हितभाषिणः । पुमर्थसाधनपराः सर्वे जनहितैषिणः ॥ ५ ॥
आद्य **आशाधर**स्तेषां प्रमुखो गुणशालिनां । **महीधरो** द्वितीयस्तु गुणग्रामैकमन्दिरं ॥ ६ ॥
**बोल्हाक**नामा समभूत्तृतीयो हारवद् गुणी । शशाङ्ककाशशङ्खाशयशःपूरितभूतलः ॥ ७ ॥
**यशोवीर**श्चतुर्थोऽभूद्दानेश्वरशिरोमणिः । लोकोत्तरचरित्रोऽभूत्पञ्चमः **पाजड**स्तथा ॥ ८ ॥
**महीधर**स्य संजज्ञे सजातोज्वलपुत्रका । गेहिनी देहिनीव श्रीः **महाश्री**रिति संज्ञिता ॥ ९ ॥
**केल्हणो** नाम संजातस्तनयस्सनयस्तथा । सद्गुरुचरणद्वन्द्वस्तमाराधनतत्परः ॥ १० ॥
अजायत प्रिया तस्य **कमलश्री**र्महायशा । सत्यापितसुभद्रादिसतीलोका गुणैर्निजैः ॥ ११ ॥
सागरा इव लावण्यकलिताश्चतुराशयाः । अजायन्त सुधर्मिष्ठाश्चत्वारस्तनयास्तयोः ॥ १२ ॥
चन्दनादपि मनोज्ञवागभूदाद्य एष **कडुक**स्ततः पुनः । **रासलः** सहजधर्मकर्मठो **पेसल**स्तु गुणशशिपेशलः ॥१३॥
**गाङ्गाक**स्तदनु गाङ्गवारिणा सन्निभः शुचितया विचक्षणः । देवपूजनरतो निरन्तरं वासनारसनिवासमानसः ॥ १४ ॥
वल्लभास्तदनु जज्ञिरे क्रमात् शीलभूषण विभूषिताङ्गकाः । भर्तृपादपद्मैकदृष्टयो मूर्तिभाज इव सञ्जाताश्रियः ॥ १५ ॥
पत्न्योऽभूवन्कुलोत्पन्ना निःसपत्नाः प्रियम्वदाः । **पद्मश्री**श्चेति **राज्यश्री-लक्ष्मीश्री**रिति संज्ञिताः ॥ १६ ॥
**पद्मश्रिया**स्त्रयः पुत्राः सञ्जाताः शुद्धबुद्धयः । प्रवाहा इव गङ्गाया जगतीपावनक्षमाः ॥ १७ ॥
प्रथमो **मोहन**स्तेषां जनमानसमोहनः । द्वितीयो **विजयपालो** बालोऽपि हि महामतिः ॥ १८ ॥
तृतीयो **लिंबदेवा**ख्यो मातुरत्यन्तवल्लभः । सहकारसमाकारो निवासः सम्पदामिव ॥ १९ ॥
**आजुका** च सुता जाता बाल्यादपि महासती । तपःकर्मणि सर्वेस्मिन्निरता विरता भवात् ॥ २० ॥
द्वितीया **महणू**नाम सञ्जाता तनया तथा । **राज्यश्रियाः** सुता जाता **बनुलू**नाम विश्रुता ॥ २१ ॥
**श्रिया** च तनया जाता **गोसली** नाम सूपभाक् । प्रतध्माना चन्द्रस्य कलेव विमलाकृतिः ॥ २२ ॥
तथा **यशोवीर**स्य संताने सुतो **नरपति**स्तथा । **शिरपाल**श्च सञ्जातः **शांतिग**स्तत्सुतोऽभवत् ॥ २३ ॥
**पाजड**स्य प्रिया जज्ञे **जयश्री**र्नामविश्रुता । तथा सुतद्वयं जातं **छाडा-आसल**नामकम् ॥ २४ ॥
**छाडाक**स्य प्रिया यज्ञे **लीलीके**ति विशालवाक् । **आसल**स्य तथा जाता जाया **आसमतिः** शुभा ॥ २५ ॥
तस्याः सुतत्रयं जातं आद्यो **जगधर**स्तथा । द्वितीयः **सूरको** नाम तृतीयो **धीधलः** पुनः ॥ २६ ॥
**धीलध**स्य प्रिया यज्ञे **लाबू**रिति शुभाशया । *इत्येवमादि सकलं **साढाक**स्य कुटुम्बकम् ॥ २७ ॥

इतश्च –

श्रीमान् सत्त्वगृहं गभीरिमनिधिर्निःशेषभूभूषणै-र्व्याकीर्णः शुचिसाधुरत्ननिकरैः पाठीनपीठान्वितः ।
संसेव्यः सुमनोभिरक्षयगुणात्मानामृतोत्कंठितै-र्नन्द्याद्दूरमपारसंवरवरः श्री**चन्द्रगच्छार्णवः** ॥ १ ॥
आद्यश्री**नन्नसूरिः** समजनि जनिताशेषदोषप्रमोषः, सद्वादीद्रैरजय्यो गुरुरमितयशो **वादिसूरि**स्ततश्च ।
सूरिः श्री**सर्वदेव**स्तदनु समभवद्वादिवृंदैकवंद्यः, श्रीमान्**प्रद्युम्नसूरिः** सकलकलिमलक्षालने वारिपूरः ॥ २ ॥

---

* पिटर्सनस्य ३ रीपोर्ट पुस्तके ( पृ० ८६ ) इयं प्रशस्तिः इत एवारभ्य मुद्रिता लभ्यते । साढाककुटुंबवर्णनात्मकः सर्वोऽप्युपरितनभागः परित्यक्तोऽस्ति ।

इत्येवमादिप्रमुखेषु सूरिवर्येषु गच्छत्सु कथाऽवशेषम् । **भद्रेश्वरः** सूरिरजायतास्मिन् मुनीश्वरस्तारितभव्यलोकः ॥ ३ ॥

तच्छिष्योऽप्यथ **चंद्रगच्छ**तिलकः श्री**देवभद्रा**भिधः, सूरिर्भूरिगुणालयः सुविहितश्रेणीधुरीणोऽभवत् । अक्लेशेन बभार मारविजयी श्रामण्यभारं पृथग्-भागीकृत्य सुदुर्वहं स्ववपुषा सैकादशांगेन यः ॥ ४ ॥

श्री**सिद्धसेन**सूरिस्तत्पट्टविशेषको जयति यस्य । कलिकोपमानसहिता दशनावलिरेव न तपःश्रीः ॥ ५ ॥

जिग्ये देवगुरुर्येन विद्यया निरवद्यया । आचार्यवर्यः समभूद् **यशोदेव**गुरुस्ततः ॥ ६ ॥

अदृष्टदोषस्तमसां निहन्ता भव्यारविन्दप्रतिबोधहेतुः । ततो विवस्वानिव **मानदेवः** सूरिर्यशःपूरितदिग्वितानः ॥ ७ ॥

ततोऽभूच्चारुचारित्रचर्यामर्यादयांबुधिः । श्रीमत्**रत्नप्रभा**चार्यो धुर्यो माधुर्यशालिनाम् ॥ ८ ॥

तत्पादाम्भोजभृङ्गः प्रवरगुणयुतः सर्वसिद्धान्तवेत्ता, ज्ञानादिश्रीनिवासः सरकरिदमने सिंहपोतः सतेजाः । मायाद्यैर्दोषजालैः प्रविरहितवपुः शर्करामिष्टवाक्य-न्यासः श्रेयःशिवश्रीं दिशतु भुवि सदा सूरि**देवप्रभो**ऽथ ॥ ९ ॥

व्याख्यास्यतस्तस्य गुरोर्मुखाब्जाद्येनागमं संसदि साधुवृत्तः ।
कुटुंबयुक्तः **कटुको** महात्मा शुश्राव सिद्धान्तरहस्यमेतत् ॥ १० ॥

चक्रे मुक्तिवधूः स्वहस्तकलिता त्रैलोक्यलक्ष्मीरपि, स्वायत्ता विदधे च दुर्गतिगतिस्तेनैव रुद्धात्मनः । येन स्वं भुजपंजरार्जितमिदं वित्तं गुरोराज्ञया, सिद्धान्ताद्भुतपुस्तकस्य लिखने साफल्यमारोपितं ॥ ११ ॥

इत्याकर्ण्य वचः सुधाकवचितं वक्त्राम्बुजात्सद्गुरोः, साधुः साधितमुक्तिमार्गमतिकः सद्भावनाभावितः । वर्षे **सिद्धि-वियत्कृशानु-विधु**भिः संख्याकृते श्रेयसे, पित्रोः सुन्दर**मुत्तराध्ययन**कं ग्रन्थं मुदालीलिखत् ॥ १२ ॥

न केवलं पुस्तकमेकमेव विलेखयामास गुरोर्भणित्या ।
निवेशयामास गुरोः पदे च **रत्नाकरं** सूरिवरं गुरुं यः ॥ १३ ॥
नक्षत्राक्षतपूरितः.................................॥

मंगलमस्तु । प्रशस्तिरियं कृता लिखिता च श्री**रत्नाकरसूरि**भिः । मंगलमस्तु श्रीश्रमणसंघस्य ॥

## [ २९ ]

## पल्लीवालवंशीय-वरहुडियान्वय-श्रे०लाहड-लेखित-व्यवहारसूत्रादिपुस्तकप्रशस्तिः* ।

[ लेखनकाल १३०९ विक्रमाब्द ]

**वरहुडिया** साधु० **राहड**सुत सा० **लाहडेन** श्रेयोऽर्थं **व्यवहारआद्यखंडं** लिखापितमिति ॥ छ ॥
**संवत १३०९ वर्षे भाद्रपद सुदि १५** ॥

अस्तीह श्रेष्ठपर्वप्रचयपरिचितः क्ष्माभृदाप्तप्रतिष्ठः, सच्छायश्चारुवर्ण्णः सकलसरलताऽलंकृतः शस्तवृत्तः । **पल्लीवाला**ख्यवंशो जगति सुविदितस्तत्रमुक्तेव साधुः, साधुव्रातप्रणंता **वरहुडि**रिति सत्ख्यातिमान् **नेमडो**ऽभूत् १

तस्योच्चैस्तनया विशुद्धविनयास्तत्रादिमो **राहडो**, जज्ञेऽतः **सहदेव** इत्यभिधया लब्धप्रसिद्धिर्जने । उत्पन्नो **जयदेव** इत्यवहितस्वांतः सुधर्मे रतः, तत्राद्यस्य सदा प्रिया प्रियतमा **लक्ष्मी** तथा **नाइकिः** ॥ २ ॥

---

* एतत्प्रशस्तियुक्तानि ताडपत्रमयपुस्तकानि स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितभाण्डागारे विद्यन्ते । 'संवत् १३०७ वर्षे' लिपिकृते अभयदेवसूरिरचित-ज्ञाताधर्मसूत्रवृत्तिपुस्तकेऽपि एषा प्रशस्तिर्लिखिता लभ्यते । द्रष्टव्यम्-पिटर्सन्, रीपोर्ट पुस्तक ३, पृ० ६०-६३ ।

आद्याया **जिनचंद्र** इत्यनुदिनं सद्धर्मकर्मोद्यतः, पुत्रश्चा**हिणी** संज्ञिता सहचरी, तस्य त्वमी सूनवः ।
ज्येष्ठोऽभूत्किल **देवचंद्र** इति यो द्रव्यं व्ययित्वा निजं, सत्तीर्थेषु शिवाय संघपतिरित्याख्यां सुधीर्लब्धवान् ॥ ३ ॥

**नामंधरा**ख्योऽथ **महधरा**ख्योऽतो **वीरधवला**भिध-**भीमदेवौ** ।
पुत्री तथा **धाहिणी** नामिकाऽभूत् सर्वेऽपि जैनांघ्रिसरोजभृंगाः ॥ ४ ॥
श्री**देवभद्रगणि**पादसरोरुहालेर्भक्त्यानमद् **विजयचंद्र**मुनीश्वरस्य ।
**देवेन्द्रसूरि**सुगुरोः पदपद्ममूले तत्रांतिमौ जगृहतुर्यतितां शिवोत्कौ ॥ ५ ॥

**नाइके**स्तु सुता जातास्तत्र ज्येष्ठो **धनेश्वरः** । **खेतू** नाम्नी प्रिया तस्य **अरसिंहा**दयः सुताः ॥ ६ ॥
द्वैतीयीकस्सुसाधुश्रुतवचनसुधास्वादनातृप्तचित्तः, श्रीमज्जैनेन्द्रबिम्बप्रवरजिनगृहप्रोल्लसत्पुस्तकादौ ।
सप्तक्षेत्र्यां प्रभूतव्ययितनिजधनो **लाहडो** नामतोऽभूत्, **लक्ष्मीश्री**रित्यभिख्या सुचरितसहिता तस्य भार्या सदार्या ॥७॥
**अभयकुमारा**भिख्यो तृतीयोऽजनि नंदनः । यो दध्रे मानसं धर्मश्रद्धासंबंधबंधुरं ॥ ८ ॥

धर्मे सहाया **सहदेव**साधोः **सौभाग्यदेवी**ति बभूव जाया ।
पुत्रौ च **षेढा**भिध-**गोसला**ख्यौ प्रभावकौ श्रीजिनशासनस्य ॥ ९ ॥

किञ्च–यौ कृत्वा गुणसंघकेलिभवनं श्रीसंघमुच्चैस्तरां, श्री**शत्रुञ्जय-रैवत**प्रभृतिषु प्रख्याततीर्थेषु च ।
न्यायोपार्जितमर्थसार्थनिवहं स्वीयं व्ययित्वा भृशं, लेभाते सुचिराय संघपतिरित्याख्यां स्फुटां भूतले ॥ १० ॥

आद्यस्य जज्ञे किल **षीवदेवी** नाम्ना कलत्रं सुविवेकपात्रं ।
तथा सुता **जेहड-हेमचन्द्र-कुमारपाला**भिध-**पासदेवाः** ॥ ११ ॥

अभवद् **गोसल**साधोर्**गुणदेवी**ति वल्लभा । नंदनो **हरिचन्द्रा**ख्यो **देमती**ति च पुत्रिका ॥ १२ ॥
**जयदेव**स्य तु गृहिणी **जाल्हणदेवी**ति संज्ञिता जज्ञे । पुत्रस्तु **वीरदेवो देवकुमार**श्च **हालू**श्च ॥ १३ ॥
शुभशीलशीलनपरा अभवंस्तेषामिमाः सधर्मण्यः । **विजयसिरी-देवसिरी-हरसिणि**संज्ञा यथासंख्यं ॥ १४ ॥
एवं कुटुम्बसमुदय उज्ज्वलवृषविहितवासनाप्रचयः । सुगुरोर्गुणगणसुगुरोः सुश्राव सुदेशनामेवम् ॥ १५ ॥

दान-शील-तपो-भावभेदाद्धर्मश्चतुर्विधः । श्रवणीयः सदाभव्यैर्भव्यो मोक्षपदप्रदः ॥ १६ ॥
विषयजसुखमिच्छोर्गेहिनः क्वास्ति शीलं, करणवशगतस्य स्यात्तपो वापि कीदृग् ।
अनवरतमदभ्रारंभिणो भावना किं, तदिह नियतमेकं दानमेवास्य धर्मः ॥ १७ ॥

ज्ञानाभयोपग्रहदानभेदात् तच्च त्रिधा सर्वविदो वदन्ति । तत्रापि निर्वाणपथैकदीपं सज्ज्ञानदानं प्रवरं वदन्ति ॥ १८ ॥
कालानुभावान् मतिमान्द्यतश्च तच्चाधुना पुस्तकमंतरेण । न स्यादतः पुस्तकलेखनं हि श्राद्धस्य युक्तं नितरां विधातुम् ॥१९॥

इत्याकर्ण्य सकर्णः ततश्च निजभुजसमर्जितधनेन । **व्यवहाराद्यखंड**स्य पुस्तकं लेखयामास ॥ २० ॥*
यावद्व्योमसरोवरे विलसतो विश्वोपकारेच्छया, सन्नक्षत्रसितांबुजौघकलिते श्रीराजहंसाविह ।
अज्ञानप्रसरान्धकारविधुरो विश्वे प्रदीपोपम-स्तावन्नंदतु पुस्तकोऽयमनिशं वावच्यमानो शुचिः ॥ २१ ॥

---

* इयमेव प्रशस्तिः **व्यवहारसूत्रद्वितीयखंड**पुस्तकप्रान्तेऽपि लिखिता लभ्यते । तत्र, इदं पद्यमेतद्रूपं विद्यते–
**इत्याकर्ण्य सकर्णः ततस्स्वविभवैः सुपुस्तकेऽस्मिन् । सत्पत्रैर्व्यवहारद्वितीयखंडं व्यलीलिखत्** ॥ २० ॥
पुनः–कल्पसूत्रभाष्यादिसंग्रहपुस्तकस्य—**संवत् १३२१ वर्षे** लिपिकृतस्य—प्रान्तभागेऽपीयं प्रशस्तिर्लिखिता दृश्यते । तत्रेदमन्त्य-पद्यमीदृग् पठ्यते
**इत्याकर्ण्य ततो निजविभवैः श्रीकल्पसूत्रभाष्यस्य । श्रीपंचकल्पचूर्णेश्च पुस्तकं लेखयामास** ॥ २० ॥
( द्रष्टव्यम्, पिटर्सन् रीपोर्ट पु० ३, पृ० १८०–१८२ )

## [ ३० ]

## प्राग्वाटवंशीय-श्रे० आसपाल-लेखित-विवेकमञ्जरीप्रकरणवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १३२२ विक्रमाब्द ]

ॐ नमः श्रीवीतरागाय ॥

यन्नाममात्रवशतोऽपि शरीरभाजां, नश्यंति सामजघटा इव दुष्कृतौघाः ।
पादाग्रलांछनमृगेंद्रभुवा भियेव देवः, स वः शिवसुखानि तनोतु वीरः ॥ १ ॥
विस्तीर्णोऽयं क्षितिरुह इव श्लाघ्यमूलप्रतिष्ठः, **प्राग्वाटा**ख्यो गरिमगुणवानन्वयोऽस्ति प्रधानः ।
लक्ष्मीर्यस्मिन्नवकिसलयश्रेणिशोभां बिभर्त्ति, ज्योत्स्नाकारा विकचकुसुमस्तोमसाम्यं च कीर्त्तिः ॥ २ ॥
आद्यस्तत्रानवद्यश्रीः **सीदः** श्रीद इवाभवत् । विश्राणनेन यश्चित्रं तत्याज न कुलीनताम् ॥ ३ ॥
**वीरदेव्य**भिधया शुभशीला तस्य शीलपरिपालनशीला ।
गेहिनीव कमला विमलाऽभूद्गेहिनी सुकृतनिर्मलबुद्धेः ॥ ४ ॥
चंद्र इव **पूर्णदेवः** सुतस्तयोः सुगुणकिरणसंपूर्णः । दोषाश्रितो न चित्रं कलंकितां न भजते यस्तु ॥ ५ ॥
लोकोपकारकरणाद्द्विज**यादिसिंहसूरे**रुपात्तिजननाज्जिनबिंबकॢप्तेः ।
पुत्रद्वयव्रतविधापनतश्च चक्रे यः सार्थकं द्रविणमायुरपि स्वकीयम् ॥ ६ ॥
तस्य च प्रियतमाऽजनि रम्या **वाल्हिविः** शशिसमुज्ज्वलशीला । वीतरागचरणार्चनचित्ता क्षेत्रसप्तकवितीर्णसुवित्ता ॥७॥
कृत्वोपतापनिधनं विधिनोपधानाभिख्यं तपः शिवसुखाय विधाय धैर्यात् ।
मालाधिरोपणमकारयदात्मनो या द्वेषद्विषो **विजयसिंह**गुरोः करेण ॥ ८ ॥
त्रपामणिक्षोणिरसावसूत सूतान्दिगीशान्स्फुटमष्टसंख्यान् । ये पुण्यकाष्ठाश्रितचेतसोऽपि चित्रं न संक्रन्दनयोगमापुः ॥९॥
भोगिभोगायितभुजस्तंभः कुलगृहं श्रियः । आद्यस्तत्राभिरामश्री**ब्रह्मदेवो**ऽभवत्सुतः ॥ १० ॥
अभिरामगुणग्रामद्रुमारामवसुंधरा । दयिता **पोहणि**स्तस्य बभूव प्रियसंभवा ॥ ११ ॥
वासनावासितस्वांत**श्चंद्रावल्यां** महत्तमे । यश्चैत्ये कारयामास बिंबं वीरजिनेशितुः ॥ १२ ॥
या **पद्मदेवसूरे**र्गुरोः कृते शुभमतिः स्ववित्तेन । चरितं त्रिषष्ठिमध्यादलेखयत्प्रथमतीर्थकृतः ॥ १३ ॥
द्वैतीयीको **बोहडि**रभवत्तनुजो गुणव्रजनिकेतम् । एतस्यां**बी**ति कुटुंबिनी च चंचद्गुणकदंबा ॥ १४ ॥
स्वकीयवंशे भुवनावतंसे ध्वजानुकारं दधदंगजन्मा । सद्धर्मनिर्मापणदत्तवित्तचित्तस्तयो**र्विल्हण**संज्ञ आद्यः ॥ १५ ॥
सती सतीसंहतीशीर्षरत्नं तस्य प्रिया जैनपदाब्जभृंगी । बभूव दानादिगुणप्रधाना सन्मानसा **रूपिणि**नामधेया ॥ १६ ॥
द्वितीय **आल्हण**श्चाभूद्भाग्यसौभाग्यजन्मभूः । अनन्यजनसामान्यसौजन्यमणिरोहणः ॥ १७ ॥
**जल्हण**स्तृतीयसूनुश्चतुर्थो **मल्हणा**भिधः । समभून्**मोहिनी** चापि सुता स्वजनमोहिनी ॥ १८ ॥
**जल्हण**स्य तृतीयस्य **नाऊ** जाया शुभाशया । **वीरपालो वरदेवो वैरसिंहः** सुतास्तयोः ॥ १९ ॥

---

* ताडपत्रात्मकं पुस्तकमिदं स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितभाण्डागारे विद्यमानमस्ति । द्रष्टव्यम्—पिटर्सन, रीपोर्ट. पुस्तक ३, पृ० १०४-९ ।

**बहुदेव**स्तु तृतीयो यश्चारित्रं च सूरिपदवीं च । संप्राप्य नाम लेभे सूरिः **श्रीपद्मदेव** इति ॥ २० ॥
चतुर्थ **आमण**श्चारुगुणमाणिक्यमंडितः । पंचमो **वरदेवा**ख्यः सत्संख्यविहितोद्यमः ॥ २१ ॥
षष्ठः पंडितसंहतिचतुरः स्फूर्जद्यशा **यशोवीरः** । आचार्यपदे लेभे **श्रीपरमानंद** इत्यभिधाम् ॥ २२ ॥
सप्तमो **वीरचंद्रा**ख्यो जज्ञेऽनूनगुणावलिः । समभूज्जि**नचंद्रा**ह्वः प्रकृष्टवपुरष्टमः ॥ २३ ॥
**वोहडिजविल्हण**स्य च पुत्रचतुष्टयमनूनगुणरूपम् । **रूपिणि**कुक्षिसरोवरकलहंसनिभं विवेकयुतम् ॥ २४ ॥
**आशापालः** कीर्त्तिवल्ल्यालवालः **सीधू**नामा भूरिधामा द्वितीयः ।
तार्त्तीयीकोऽभूज्ज**गत्सिंघ**संज्ञस्तूर्यः सूनुः **पद्मसिंहा**भिधानः ॥ २५ ॥
**वीरी**ति पुत्री सुगुणैः पवित्रा मनोहरा सा हरिणीसुनेत्रा । अभूच्छुभाचारपवित्रपात्रा सद्रूपलावण्यविशुद्धगात्रा ॥२६॥
जग्राह यः पुत्र इह तृतीयः कामप्रदां संयमराज्यलक्ष्मीं । क्षिप्रं तथा सूरिपदं च लेभे सुदुर्लभं पुण्यवतापि पुंसा ॥२७॥
प्रथमस्या**सपाल**स्य **खेतुका**कुक्षिसंभवाः । **सज्जनोऽभयसिंहा**ख्यस्**तेजाकः सहजः** सुताः ॥ २८ ॥
**सीधुका**ख्यद्वितीयस्य **सोहरे**त्यभवद्वधूः । अगण्यपुण्यदाक्षिण्यलावण्यादिगुणान्विता ॥ २९ ॥
तूर्यस्य **पद्मसिंह**स्य **वाल्हू**नाम्नी प्रियाऽभवत् । सुतस्तयोः समुत्पन्नो **नागपाला**भिधः सुधीः ॥ ३० ॥
किंच—रूपं बलं च विभवो विषयाभिसंगो नीरोगता लवणिमा प्रियसंप्रयोगः ।
वातावधूतपटचंचलमेव सर्वं विज्ञाय धर्मनिपुणैर्भविभिर्विभाव्यम् ॥ ३१ ॥
अंगुष्ठमात्रं यो बिंबं कारयत्यर्हतां बुधः । सिद्धिनारीपरीरंभभवं स लभते सुखं ॥ ३२ ॥
न मनःपर्ययमवधि न केवलज्ञानमत्र नैवास्ति । पुस्तकलिखनमेतत्तद्दृष्टिर्दृष्टिहीनानाम् ॥ ३३ ॥
**श्रीरत्नप्रभसूरे**र्गुरोः सकाशान्निजस्य सद्बंधोः । संसारांभोधितरीं श्रुत्वेत्यथ देशनां विशदाम् ॥ ३४ ॥
**डाहापद्र**पुरे चैत्ये कारयामास भावभाक् । श्रीमतः सुमतेर्बिंबमर्हतस्त्रिजगत्पतेः ॥ ३५ ॥
आलेखयत्सैष कि**लासपालः** श्रेयःश्रिये स्वस्य पितुः प्रधानम् ।
**विवेकमंजर्य**भिधां दधानं सत्पुस्तकं निर्वृतिदीपकल्पम् ॥ ३६ ॥
यावत्पूर्वाद्रिशृंगोदित इह जगति स्वप्रतापेन हंति, प्रोद्यन्नीलीविनीलं तिमिरभरभरं तापनस्तत्समंतात् ।
यावच्छेषाहिराजः क्षितिवलयमसौ स्फूर्तिमान्संबिभर्ति, श्रेयोधिष्ठानयानप्रवरर...... भः पुस्तकस्तावदास्ताम् ॥ ३७ ॥
**चक्षु-लोचन-विष्टपात्रिनयन**प्रोद्भूत(१३२२)संवत्सरे, मासे कार्तिकनाम्नि चंद्रसहिते कृष्णाष्टमीवासरे ।
वृत्तिर्निर्वृतिमार्गदीपकलिकातुल्या विनीतात्मना, **रामे**ण स्वयमादरेण लिखिता नंद्यादनिंद्याक्षरा ॥ ३८ ॥
प्रशस्तिः समाप्ता ॥ शुभमस्तु ॥ पूज्यश्री**प्रद्युम्नसूरि**भिः प्रशस्तिः शोधितेति ॥ छ ॥

## [ ३१ ]

## ऊकेशवंशीय-श्रे० सपुण्य-लेखित-कल्पसूत्र-कालिकाचार्यकथा-पुस्तिकाप्रशस्तिः* ।

[ लेखनकाल १३४४ विक्रमाब्द ]

**ऊकेशवंशो** भुवनाभिरामच्छायासमाश्वासितसत्त्वसार्थो ।
**शौराणकीया**ऽस्ति विशालशाखा साकारपत्रावलिराजमाना ॥ १ ॥

* इयं ताडपत्रीया पुस्तिका पत्तने संघवीपाडा-स्थितभाण्डागारे विद्यते ।

तत्राभवद् भवभयच्छिदुरार्हदंह्रिराजीवजीवितसदाशयराजहंसः ।
पूर्वः पुमान् **गणहरि**र्गणिधारिसार से० ·················॥
*× × × × × × ×

····यान् **थिरदेव**स्य **हरिदेवो**ऽस्ति [ बांधवः ] । **हर्षदेवी**भवाः पुत्रा **नरसिंहा**दयोऽस्य च ॥ १५ ॥
सहोदर्यः **सपौनस्य लष्मिणिर्द्धर्म**कर्म्मठा । **कर्मिणि-हरिसणि**श्च पुत्र्यस्तिस्रो **गुणश्रियः** ॥ १६ ॥
**गुणधर**स्य यो भ्राता कनिष्ठो **धुंधुका**भिधः । **षेढा** नामास्ति तत्पुत्रः पवित्रगुणसंततिः ॥ १७ ॥

अथ गुरुक्रमः—

श्रीराजगच्छमुकुटोपम**शीलभद्र**सूरेर्विनेयतिलकः किल **धर्म्मसूरिः** ।
दुर्वादिगर्वभरसिंधुरसिंहनादः श्री**विग्रहक्षितिपते**र्दलितप्रमादः ॥ १८ ॥

**आनंदसूरि**शिष्यश्री**अमरप्रभ**सूरितः । श्रुत्वोपदेशं कल्पस्य पुस्तिकां नूतनामिमां ॥ १९ ॥
उद्यमात् **सोमसिंह**स्य **सपुण्यः** पुण्यहेतवे । अलेखयच्छुभालेखां निजमातु**र्गुणश्रियः** ॥ २० ॥

यावच्चिरं धर्म्मधराधिराजः सेवाकृतां सुकृतिनां वितनोति लक्ष्मीं ।
मुनींद्रवृंदैरिह वाच्यमाना तावत् मुदं यच्छतु पुस्तिकाऽसौ ॥ २१ ॥

**संवत् १३४४ वर्षे मार्ग० शुदि २ रवौ सोमसिंहे**न लिखापिता ॥

# [ ३२ ]

## दयावटपुरीय-श्रावकसंघ-लेखित-पुस्तकप्रशस्तिः† ।

[ लेखनकाल १३४९ विक्रमाब्द । ]

नमः श्रीवर्द्धमानाय वर्द्धमानाय वेदसा । वेदसारं परं ब्रह्म ब्रह्मबद्धस्थितिश्च यः ॥ १ ॥

स्वबीजमुप्तं कृतिभिः कृषीवलैः क्षेत्रेषु सिक्तं शुभभाववारिणां ।
क्रियेत यस्मिन् सफलं शिवश्रिया पुरं तदत्रास्ति **दयावटा**भिधम् ॥ २ ॥

स्यातस्तत्रास्ति वस्तुप्रगुणगुणगणः प्राणिरक्षैकदक्षः, सज्ज्ञाने लब्धलक्ष्यो जिनवचनरुचिश्चंचदुच्चैश्चरित्रः ।
पात्रं पात्रैकचूडामणिजिनसुगुरूपासनावासनायाः, संघः सुश्रावकाणां सुकृतमतिरमी संति तत्रापि मुख्याः ॥ ३ ॥
**होनाकः** सज्जनज्येष्ठः श्रेष्ठी **कुमरसिंहकः** । **सोमाकः** श्रावकः श्रेष्ठः शिष्टधी**ररसिंहकः** ॥ ४ ॥
**कडुयाक**श्च**मु**श्रेष्ठी **सांगाक** इति सत्तमः । **खीम्वाकः सुहडाक**श्च धर्मकर्मैककर्मठः ॥ ५ ॥

एतन्मुखः श्रावकसंघ एषोऽन्यदा वदान्यो जिनशासनः सः ।
सदा सदाचारविचारचारुक्रियासमाचारशुचिव्रतानाम् ॥ ६ ॥
श्रीमज्ज**गचंद्र**मुनींद्रशिष्यश्रीपूज्य**देवेंद्रमुनी**श्वराणाम् ।
तदाद्यशिष्यत्वभृतां च **विद्यानंदा**ख्यविख्यातमुनिप्रभूणाम् ॥ ७ ॥

---

* अत्रैकं पत्रं [ १६२ अङ्काङ्कितं ] विनष्टमस्ति । ततः प्रशस्तेः प्रायः १३ पद्यानि प्रणष्टानि तत्र ।

† एतत्प्रशस्तिसमन्वितानि ताडपत्रात्मकानि **श्राद्धदिनकृत्यसूत्रवृत्ति-उपदेशमालादि**ग्रन्थपुस्तकानि स्तम्भतीर्थे शान्तिनाथ-भाण्डागारे विद्यन्ते । द्रष्टव्यम्—पिटर्सन्, रीपोर्ट पुस्तक ३, पृ० १६८–७० ।

तथा गुरूणां स्वगुणैर्गुरूणां श्री**धर्मघोषा**भिधसूरिराजां ।
सद्देशनामेवमपापभावां शुश्राव भावावनतोत्तमांगः ॥ ८ ॥

विषयसुखपिपासोर्गेहिनः क्वास्ति शीलं, करणवशगतस्य स्यात्तपो वापि कीदृक् ।
अनवरतमदभ्रारंभिणो भावनाः का-स्तदिह नियतमेकं दानमेवास्य धर्मः ॥ ९ ॥

किंच–

धर्मः स्फूर्जति दानमेष गृहिणां ज्ञानाभयोपग्रहै-स्त्रेधा तद्वरमाद्यमत्र यदितो निःशेषदानोदयः ।
ज्ञानं चाद्य न पुस्तकैर्विरहितं दातुं च लातुं च वा, शक्यं पुस्तकलेखनेन कृतिभिः कार्यस्तदर्थोऽर्थवान् ॥ १० ॥

श्रुत्वेति संघसमवायविधीयमान-ज्ञानार्चनोद्भवधनेन मिथः प्रवृद्धि ।
नीतेन पुस्तकमिदं श्रुतकोशवृद्ध्यै, बद्धादरश्चिरमलेखयदेष हृष्टः ॥ ११ ॥

यावज्जिनमतभानुप्रकाशिताशेषवस्तुविस्तारः । जगति जयतीह पुस्तकमिदं बुधैर्वाच्यतां तावत् ॥ १२ ॥

॥ शुभं भवतु ॥ ग्रंथांग्र १३००० प्रमाणं । मंगलं महाश्रीः । लेखक-पाठक-दातार-समस्तसंघ-दीर्घायुर्भवतु ॥

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ॥
शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः । दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥ २ ॥
भग्नप्रष्ठि-कटिग्रीवा तच्च दृष्टिरधोमुखः । कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥ ३ ॥

**संवत् १३४९ वर्षे माघसुदि १३** अद्येह **ग्रावडे** श्रे० **होना** श्रे० **कुमरसिंह** श्रे० **सोम**प्रभृति संघसमवायसमारब्धपुस्तकभाण्डागारे ले० **सीहाके**न लिखितं ॥

# [ ३३ ]

## सुश्राविका-धांधी-प्रदत्त-दशवैकालिक-पाक्षिकसूत्र-पुस्तिकाप्रशस्तिः* ।

[ प्रदानसमय १३५२ विक्रमाब्द ]

श्री**मेदपाटदेश**क्षितिराजप्राज्यराज्यधौरेयः । **सीमंधर** इति मंत्री श्रीकरणिक इह समस्ति पुरा ॥ १ ॥
उन्मीलद्गुरुलीलस्फूर्जितशीलप्रधानशृंगारा । **नीभल** इति तद्गृहिणी गृहनीतिविशारदा जाता ॥ २ ॥
तस्याः स्वीयभगिन्या अगण्यसत्पुण्यकल्पलतिकायाः । सजलजलवाहपटली दत्ता श्रीपुस्तिका शस्ता ॥ ३ ॥
**धांधी**सुश्राविकया वाचयितुं गच्छसकलसाधूनाम् । सेयं प्रवाच्यमाना विबुधैर्नंद्याच्चिरं कालम् ॥ ४ ॥
श्री**विक्रमत्रयोदशशतद्विपंचाशकस्य** ( १३५२ ) वर्षस्य । भाद्रपदाभिधमासे पक्षे……स्तिका प्रवरे ॥ ५ ॥

# [ ३४ ]

## उपकेशवंशीय-संघपति-आशाधर-लेखित-उत्तराध्ययनसूत्रवृत्ति-पुस्तकप्रशस्ति† ।

[ लेखनकाल १३५२ विक्रमाब्द ]

…………[ पूर्वपत्रस्य नष्टत्वात् प्रशस्तेरस्याः आद्यानि १४ पद्यानि विनष्टानि ]…………
**आशाधर**स्तदाद्यः संघपतिः सप्ततीर्थसुप्रथितः । निर्मलकीर्ति**देशल**संज्ञस्तस्यानुजन्मा च ॥ १५ ॥

---

* ताडपत्रात्मिका इयं पुस्तिका पत्तने संघसत्कभाण्डागारे विद्यते । द्रष्टव्यम्–पिटर्सन्, रीपोर्ट पुस्तक ५, पृ० ६१ ।
† ताडपत्रात्मकं पुस्तकमिदं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यमानमस्ति । पिटर्सन्, रीपोर्ट पु० १, पृ. ४१ उल्लिखित ।

लावण्यपात्रं किल **लूणसिंह**स्तयोर्लघुः पापगजैकसिंहः ।
न्यायार्जितैर्यस्य धनैः सदैव साधुत्वभावं हि व्रतं विनैव ॥ १६ ॥

**रत्नश्रीः** सद्भार्या तेषामाद्यस्य श्रीरिवाभा⋯⋯[ । ] ⋯⋯⋯**भोली लाछिर्लावण्यसिंहस्य** ॥ १७ ॥
**रत्नश्री**कुक्षिजाः पुत्र्यश्चतस्रश्चतुराशयाः । **माणिक्या** प्रथमा तासां शोभितोभयपक्षका ॥ १८ ॥
ततः **सोहग**संज्ञा च शीलादिगुणभूषिता । तृतीय-तुर्ये दुहिते **कस्मीरी-माउका**भिधे ॥ १९ ॥

**सहजपाल** इति प्रथमः सुतः सहजसद्गुणतः सुमनोमतः ।
भुवनपेसल**देशल**सं [ज्ञिनः]⋯⋯⋯दुतदुःकृततानवः ॥ २० ॥

द्वितीयः **साहणा**भिख्यः ख्यातश्च गुणसम्पदा । जिनांघ्रिकमले भृङ्गस्तृतीयः **समरा**भिधः ॥ २१ ॥
जज्ञ ता(?)सुसखी यस्याः सा **जणकू**स्तनूरुहा । **रम्भा**भिधानदेव्याश्च **देशल**स्य शुभात्मनः ॥ २२ ॥
**सहजलदेवी** जाया मायामुक्तस्य **सहजपाल**स्य । **राजमतिः** सत्कान्ता **साहण**साधोस्तु सद्गु⋯⋯॥ २३ ॥
[ पुत्रो ] **लावण्यसिंहस्य सामन्तः** समतायुतः । तल्लघुः **साङ्गण**श्चापि कुलधूर्धवलः किल ॥ २४ ॥
पुण्यपानीयसम्पर्काद् वृद्धिं याति कुलद्रुमे । **आशाधरो** विशुद्धात्मा चिन्तयामास चेतसि ॥ २५ ॥
श्रुताधीनं कलौ धर्म्म नैव तत्पुस्तकं विना । पुस्तकानि तु लिख्यन्ते लेखकैर्लब्धवेतनैः ॥ २६ ॥
विचिंत्येति स्वचित्तेन पित्रोः पुण्याय भावतः । **उत्तराध्ययन**स्येह ससूत्रं वृत्तिपुस्तकम् ॥ २७ ॥
**सिद्धसूरि**गुरोराज्ञां बिभ्राणः शिरसा भृशम् । **करेष्वग्नीन्दु १३५२ वर्षे**ऽत्र व्यलीलिखदवाचयत् ॥ २८ ॥ (युग्मम्)
एवं संघाधिपोऽसौ विशदगुणमयः साधु**राशाधराह्वः**, पित्रोः पुण्याय हर्षातिरुचिरमिदं पुस्तकं वर्ण्य⋯⋯⋯।
⋯⋯⋯⋯चुतानां कलितमसि सतामुत्तराध्यायवृत्तेः, विद्वल्लोकस्य चित्तप्रशमसुखकरं कारयामास विज्ञः ॥ २९ ॥
**आशाधर** तवायुर्वा कीर्त्तिवल्लीसमुद्गता । आलवालेव दुःकाले⋯⋯⋯दीनदानतः ॥ ३० ॥
श्री**देवगुप्त**सूरीणां शिष्यः समुदि संसदि । **पासमूर्ति**स्तदादेशात् किमप्यर्थमभाषत ॥ ३१ ॥
⋯⋯⋯जस्येह पुष्पदन्तौ स्थिराविमौ । गुरुभिर्वाच्यमानोऽयं तावन्नंदतु पुस्तकः ॥ ३२ ॥

**सम्वत् १३५२ वर्षे वर्षाकाले** श्री**उपकेशगच्छे** श्री**कुकुदाचार्य**संताने श्री**सिद्धसूरि**प्रतिपत्तौ सा० **वेसट**संताने सा० **गोसला**त्मज संघपति **आशाधरेण** उत्तराध्ययनवृत्ति ससूत्रा कारिता ॥ इति ॥

# [ ३५ ]

## श्रीमालवंशीय-श्रावकगणलेखित-कल्पसूत्र-कालिकाचार्यकथा-पुस्तिकाप्रशस्तिः* ।

[ लेखनकाल १३६५ विक्रमाब्द ]

—इति **पल्लीवाल**गच्छे श्री**महेश्वरसूरि**भिर्विरचिता कालिकाचार्यकथा समाप्ता ॥

**श्रीमालवंशो**ऽस्ति⋯⋯विशालकीर्त्तिः श्री**शान्तिसूरि**प्रतिबोधित**डीडका**ख्यः ।
श्री**विक्रमाद्वेदनभर्महर्षि**वत्सरे श्रीआदिचैत्यकारापित नवहरेच (?) ॥ १ ॥

तस्य शाखासमुद्भूतो **देवसिंहो** गुणाधिकः । तत्सुतः **कर्मसिंह**स्याभूत्पुत्रो **मलसिंहकः** ॥ २ ॥
**महीरोलन**गोत्रे च मंडनो **धांधका**भिधः । तत्सुतास्त्रयः सञ्जाता **ऊदल-देदाक**नामतः ॥ ३ ॥

---

* एषा पुस्तिका स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितभाण्डागारे विद्यते । इयं प्रशस्तिः प्रायः प्रभ्रष्टपाठात्मिकाऽस्ति ।

गोत्रमण्डन**हालाको**, भग्नी यस्य चतुष्टयी । शीलालङ्कारधारीण्या**भू मनी** च **मइणला** ॥ ४ ॥
षड्दर्शनभक्ता च श्रीरिवाहरिमण्डनी । अर्द्धाङ्गलक्ष्मी **सादू मलसिंहस्य** पुण्यभुक् ॥ ५ ॥
पञ्चपुत्रा पवित्रा च पञ्चपुत्री सतीव्रता । कल्पवृक्षसमानेऽपि सङ्घशासनसेवकाः ॥ ६ ॥

**धारा-रामाक-लाषाकाः जइतसिंह-भीमकौ ।**
**ऊदी पूनी** च **चांदू** च **रुक्मिणी सोनणी** तथा ॥ ७ ॥

–**धाराक**पत्नी च सुव्रता **जयश्री** तदङ्गजा वेदमिव चतुष्टयः । सधर्माणौ **षांषण-मदनकौ** च······।
······**रत्न**स्य रत्नाकरतुल्यरूप **धनसिंह वीर** स्वजनप्रियश्च ॥ ८ ॥

**रामा**पुत्रस्तु **खेताकः पद्मो लाषाक**नन्दनः । **जइतसिंह**सुता **हालू भीमा**पुत्री **सलक्षणी** ॥ ९ ॥

स्वश्रेयसे कारितकल्पपुस्तिका ······दृकपुण्योदयरत्नभूमिः ।
श्रीप**ल्लीगच्छे** सुगुणैकधामभिर्वाचिता श्री**महेश्वर**सूरिभिः ॥ १० ॥

**नृपविक्रमकालातीत सं० १३६५ वर्षे भाद्रपदवदौ** नवम्यां तिथौ श्री**मेदपाट**मण्डले **वऊणा** ग्रामे **कल्पपुस्तिका** लिषिता ॥

# [ ३६ ]

## ऊकेशवंशीय-धर्कटान्वय-श्रावकमूलूगृहीत-महावीरचरित्र-पुस्तकप्रशस्तिः* ।

**[ ग्रहणकाल १३६८ विक्रमाब्द ]**

······································ सरस्वतापदमसौ सद्वृत्तमुक्तालयः ।
प्रौढश्रीकुलमंदिरं विजयते कारेणुगच्छांबुधि-श्चित्रं यत्र जडाशयो न च परं कुग्राहसत्त्वाकुलः ॥ १ ॥

सत्पत्रराजी शुभपर्वरम्यः छायी सुशाखी सरलः सुवर्णः ।
सद्धर्मकर्मा क्षितिभृत्प्रतिष्ठवंशोऽस्ति वंशो भूवि **धर्कटा**नाम् ॥ २ ॥

श्रीम**दूकेशवंशो**ऽस्मिन् स्वच्छमुक्ताफलोपमाः । साधूनां हृदलंकारा बभूवुः पुरुषास्त्रयः ॥ ३ ॥
आद्यो **देवधर**स्तेषु दाने धाराधरः परः । प्रीणिताशेषलोकोऽभून्न तु जातु जडान्वितः ॥ ४ ॥
जिनालययशःसिद्धिदानपुण्यादिकर्मणाम् । समुद्धरणधौरेयो द्वितीयोऽभूत्**समुद्धरः** ॥ ५ ॥
दानादिगुणगणारामयशःकुसुमसौरभैः । वासिताशोऽपरो जात **आशाधर**स्तृतीयकः ॥ ६ ॥
**समुद्धर**स्य निर्माया जाया सौभाग्यशोभिनी । **शोभिनी**त्याख्यया जाता शीलालंकारधारिणी ॥ ७ ॥
धर्मद्रुमस्य मूलाभो जज्ञे **मूलूः** सुतस्तयोः । पुत्री **सरस्वती लीलू** जातौ ब्राह्मीश्रियाविव ॥ ८ ॥
गेहिनी **मूलू**कस्यास्ति **नाल्ही** गंगेव देहिनी । तयो रत्नत्रयाधाराः पुत्राः संजज्ञिरे त्रयः ॥ ९ ॥
आद्यो **वइराक**नामा द्वितीयः **छोहडः** सुधीः । **सीहड**स्तृतीयः ख्यातः पुमर्था मूर्तका इव ॥ १० ॥
पुत्रिकाश्च तयोस्तिस्रो जाता शक्तित्रयोपमाः । **चांपल-कर्मी-कर्पूरी** सत्यशीलदयान्विताः ॥ ११ ॥
**वइराक**स्य सद्भार्या नयविनयगुणान्विता । **वस्तिणि**र्वस्तुतत्त्वज्ञा स्वजनानंददायिनी ॥ १२ ॥
तस्या जाताविमौ पुत्रौ धर्मशीलपरायणौ । आद्यो **मदन** एवासौ द्वितीयः **कर्मसिंह**कः ॥ १३ ॥

* ताडपत्रमयं पुस्तकमिदं पत्तने संघसत्कभाण्डागारे विद्यते । द्रष्टव्यम्–पिटर्सन्, रीपोर्ट पुस्तक ५, पृ० ५९ ।

अथाशाधरकांताऽभूत्खेतूः क्षेत्रं सुकर्मणाम् । **लक्ष्मीधर**स्तयोः पुत्रो लक्ष्मीवर इवापरः ॥ १४ ॥
**रूपला** रुक्मिणीवास्ति तस्य सद्धर्मचारिणी । तत्सुतो **हरपाला**ख्यः **छाडू** दक्षा च तत्सुता ॥ १५ ॥
एवं स्वकुटुंबयुतः साधु**मूलूः** स्वमातृश्रेयसे । श्रीमन्**महावीरचरित्रं** गृहीतं निजगुरुभिर्वाचयांचक्रे ॥ १६ ॥
तस्मिन्विसयकारिहारिचरितः **कृष्णर्षि**शिष्यः पुरा, चंच**चंद्रकुल**ध्वजः समजनि श्री**नन्नसूरिः** प्रभुः ।
उद्गीते दिवि किन्नरैर्यदमलश्लोके सुरा धुन्वते, मूर्ध्नः कांचनकिंकिणीकवचितश्रोत्रं गजास्यं विना ॥ १७ ॥

**–संवत् १३६८ वर्षे कोलापूर्यां** श्रीमन्महावीरचरितं श्री**नन्नसूरि**भिः सभाव्याख्याने व्याख्यातं । श्रावक**मूलू-वइरा**सत्कम् ॥

# [ ३७ ]

## श्रावक-रणसिंह-लेखित-पार्श्वनाथचरित्र-पुस्तकप्रशस्तिः ।*

[ लेखनकाल १४३६ विक्रमाब्द ]

**संवत् १४३६ वर्षे पौषसुदि ६ गुरौ** श्री**पार्श्वनाथचरित्र**पुस्तकं लिखापितमस्ति ॥ छ ॥

श्री**अर्बुदा**भिधमहीधरपार्श्ववर्ती ग्रामोऽस्ति **नांदिय**वराभिधया प्रसिद्धः ।
श्री**वर्द्धमान**जिननायकतुङ्गशृङ्गप्रासादराजपरिपावितभूमिभागः ॥ १ ॥
तत्रास्ते **रणसिंहः** सुश्राद्धः श्राद्धधर्मधौरेयः । धार्मिकमतल्लिका सोऽन्यदैवमशृणोत् सुगुरुवाक्यं ॥ २ ॥
न ते नरा दुर्गतिमाप्नुवन्ति न मूकतां नैव जडस्वभावम् ।
न चांधतां बुद्धिविहीनतां च ये लेखयन्तीह जिनस्य वाक्यम् ॥ ३ ॥
निजवित्तस्य साफल्यकृते ज्ञानावृतेर्भिदे । स ततो लेखयामास श्री **पार्श्वचरितं** मुदा ॥ ४ ॥

श्रे० **वीरा-आल्हू**सुतेन धार्मिक**रणसिंहेन** श्री**तपागच्छ**गगनभास्कर श्री**देवेन्द्रसूरि** तत्पट्टालंकरण श्री**विद्यानंदसूरि** तत्प० श्री**धर्मघोषसूरि** तत्प० श्री**सोमप्रभसूरि** तत्प० श्री**विमलप्रभसूरि**[1] श्री**परमाणंदसूरि**[2] श्री**पद्मतिलकसूरि**[3] जगद्विख्यात श्री**सोमतिलकसूरि** तत्प० श्री**चंद्रशेखरसूरि** श्री**जयानंदसूरि** चरणकमलचञ्चरीकाणां सांप्रतं गच्छनायक भट्टारकप्रभु श्री**देवसुंदरसूरि**वराणां श्री**ज्ञानसागरसूरि** श्री**कुलमंडनसूरि** श्री**गुणरत्नसूरि** महोपाध्याय श्री**देवशेखरगणि** पं० **देवप्रभगणि** पं० **देवमंगलगणि** प्रमुखपरिवारसहितानां श्रीसंघसभामध्यव्याख्यानार्थं श्री**पत्तनीय** सं० **सोमसिंह** सं० **प्रथमादि** श्रीसंघस्य लेखयित्वा समर्पितम् ॥ छ ॥

# [ ३८ ]

## माऊ नाम्नी श्राविका-लेखित-[ हेमचन्द्रीय ] अजितजिनचरित्रप्रतिबद्ध द्वितीयपर्व-पुस्तकप्रशस्तिः ।†

[ लेखनकाल १४३७ विक्रमाब्द ]

–समाप्तं चेद**मजितस्वामिचक्रवर्त्ति**प्रतिबद्धं द्वितीयं पर्वेति ॥ छ ॥ मंगलं महाश्रीः ॥ छ ॥

---

* ताडपत्रोपरि लिखितमेतच्चरित्रपुस्तकं पत्तने संघवीपाडास्थितभाण्डागारे सुरक्षितमास्ते ।

† एतत्प्रशस्तिसमङ्कितं पुस्तकं पत्तने संघसत्कभाण्डागारे विद्यते । ताडपत्रसदृशाकारा कागदमयी प्रतिरियम् ।

**संवत् १४३६ वर्षे भाद्रपद वदि ५ भूमे** लक्षतानि । पं० **मलयचंद्रशिष्य आल्हाकेन** लिखितमिति भद्रं ॥ छ ॥ छ ॥

भग्नपृष्ठिकटिग्रीवासूक्ष्मदृष्टिरधोमुखैः । कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥ छ ॥
जितो गत्या गजो यस्य सेवाहेवाकितां गतः । चिह्वापन्हवतः सोऽस्तु श्रिये श्रीअजितो जिनः ॥ १ ॥
**श्रीमाले** भुवनोत्तंसे वंशे मौक्तिकवत्पुरा । **देवसिंहा**भिधः श्रेष्ठी जातो जिनमतोच्छ्रितः ॥ २ ॥
विमुक्तमाया जया च तस्य **देवलदे**व्यभूत् । **माऊ** नाम्नी हि ( सु ? ) ता पुण्ये **सामत**स्य तु भ्रातृजा ॥ ३ ॥
दया-दाक्षिण्य-दमता-दान-मानादिभिर्गुणैः । **माऊ**नाम्नीं विहायान्यां नाज्ञासिष्म वयं भुवि ॥ ४ ॥
इतश्च — श्रीमत्**कोरंटगच्छा**ब्धिसमुल्लाससुधानिधिः । सूरिः सैद्धान्तिको जज्ञे **सावदेवः** प्रभुः पुरा ॥ ५ ॥
तत्पट्टकमलाकेलिशैलः शीलकलोज्वलः । श्री**नन्नसूरि**सूरींद्रस्ततो जयति संप्रति ॥ ६ ॥
तन्मुखाद्देशनां श्रुत्वा पित्रोः पुण्यविवृद्धये । श्रीजिनाजितनाथस्य सा चरित्रमलीलिखत् ॥ ७ ॥
गते **विक्रमतो** वर्षे **सप्ताग्नि**३**स्वर**१४संख्यके । श्रीमद्भ्यो **नन्नसूरि**भ्यस्तेभ्यस्तत्प्रददे तया ॥ ८ ॥
यावन्मेरुः स्थिरो यावदुदेति दिनकृद्दिवि । वाच्यमानं बुधैस्तावत्पुस्तकं नंदतादिदं ॥ ९ ॥

॥ छ ॥ मंगलं भूयात् गुरुभ्यः ॥

# [ ३९ ]

## उकेशवंशीय-श्रेष्ठिमाला-लेखित-धर्मसंग्रहणिवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १४३७ विक्रमाब्द ]

**संवत् १४३७ वर्षे अश्विनवदि प्रतिपदतिथौ शनिवारे ।** धर्मसंग्रहणिनामग्रन्थस्य पुस्तकं लिखापितमस्ति ॥

जैनत्वाव्यभिचारिभावसुभगाः सर्वेऽपि यस्मिञ्जना-स्तस्मिन् धर्मयशःसमृद्धिविशदे वंशे **उकेशा**ह्वये ।
श्राद्धोऽभून्**नरसिंह** इत्यभिधया साधुः प्रसिद्धः सुधी-स्तस्य प्रौढगुणा बभूव **नयणादेवी**ति चित्तप्रिया ॥ १ ॥
तयोरभूवन् तनयास्त्रयोऽमी **मूंजाल-माला-महीपाल**संज्ञाः ।
**माला**भिधस्तेषु विशेषधर्म्मी खर्वीकृतद्रोहकमोहगर्वः ॥ २ ॥
पुण्याय पाणिग्रहणे निषेवी धीरः सुशीलोत्तमगेहमेधी । जिनेश्वरार्चादिविशिष्टनित्यानुष्ठाननिष्ठः सुकृतालिपुष्टः ॥ ३ ॥
साक्षात्तीर्थमिलातले सुविपुले **चांद्रे कुले** श्री**तपागच्छ**व्योमविभूषणं वितमसस्तेजस्विनोऽर्केन्दुवत् ।
श्रीगच्छाधिपपूज्यसद्गुरु**जयानंदा**ह्वयाः सूरयः श्रीमंतो गुरु**देवसुंदर** इति ख्याताश्च सूरीश्वराः ॥ ४ ॥
तेषां गुरूणामुपदेशयोगाद् दानं सदानंदरमानिदानम् । विज्ञाय विज्ञो वपते स सप्तक्षेत्र्यां नयोपार्जितमात्मवित्तं ॥ ५ ॥
शास्त्रलेखनमिहापि हि सारं ज्ञानसत्रसदृशं यत एतत् । इत्यवेत्य विशदाशयवृत्ति**र्धर्मसंग्रहणिवृत्ति**मिमां सः ॥ ६ ॥
साधु**मल्ल** इह लेखयति स्म **स्तंभतीर्थनगरे** गरिमाढ्ये ।
**भूधराग्नि**३**-जल**४**धीन्दु**१**-**मिताङ्के वत्सरेऽश्वयुजि निर्मलपक्षे ॥ ७ ॥
सुराद्रिदंडस्थितिमिद्धतारामुक्तावलीकं वियदातपत्रम् । श्रीसंघराजी परियावदास्ते सत्पुस्तकं नंदतु तावदेतत् ॥ ८ ॥

* एतत्प्रशस्तिसमन्वितं ताडपत्रात्मकं पुस्तकं पत्तने संघवीपाडास्थितभाण्डागारे विद्यते ।

# [ ४० ]

## पल्लीवालकुलीन-श्रेष्ठिसाल्हा-लेखित-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १४४२ विक्रमाब्द ]

संवत् १४४२ वर्षे भाद्रपदसुदि २ सोमे लिखितमिदं पुस्तकं ॥ श्रीस्तंभतीर्थनगरे लिखितं ॥
आभूश्रेष्ठी पल्लीवालकुले तत्सुतश्च वीराकः । तस्य सुतौ विदितौ जगति महणसिंहाख्य-बीजाख्यौ ॥ १ ॥
बीजाकस्य श्रीरिति समजनि भार्या सुतास्त्रयस्तस्य । ज्येष्ठः कुमारपालो द्वावनुजौ भीम-मदनाख्यौ ॥ २ ॥
आद्यस्य जायामहणदेव्यामंगभवास्त्रयः । राणिगो वइराभिख्यः पूनाकश्चेति नामतः ॥ ३ ॥
तेषु राणिगपुत्रस्य झांझणस्य तनूद्भवाः । सलषा-विजपालाख्य-निरया-जेसलसंज्ञिताः ॥ ४ ॥
सलषाकस्यास्ति खीमसिंह-संज्ञस्तनूरुहः । विजपालस्य पुत्रौ द्वौ जयसिंहो गुणैकभूः ॥ ५ ॥
नरसिंहश्च निरयाकस्य श्लाघ्यगुणांबुधेः । भार्यायां नागलदेव्यां जाताः संति सुतास्त्रयः ॥ ६ ॥
ते चैते लखमसिंहो रामसिंहश्च गोवलः । सत्क्रियौदार्ययात्राद्यैः कृत्यैर्ये सज्जनोत्तमाः ॥ ७ ॥
वंशः प्रौढो भीमस्य जनिकर्पूरदेविजायायाम् । मदनस्य सरस्वत्यां देपालाख्यो बभूव सुतः ॥ ८ ॥
तस्याथ धर्मज्ञजनालिसीम्नो भीमस्य निस्सीमगुणांबुराशेः । पुत्राः पवित्राश्चरितैकपात्रं चत्वार आसन् विशदावदाताः ॥९॥

तेषामाद्यः पद्मनामा यदीयो धीधाख्योऽभूत्सूनुरन्यूनबुद्धिः ।
धौरेयो यो देवगुर्वादिकार्ये पूनाह्वानस्तस्य पुत्रोऽधुनाऽस्ति ॥ १० ॥

द्वितीयः साहणो यस्य पौत्रोऽस्ति कडुयाभिधः । तृतीयस्तनयो जज्ञे सामतः संमतः सताम् ॥ ११ ॥
तुर्योऽथ सौवर्णिकवर्ण्यसूराभिधः सुधापेयलसच्चरित्रः । तस्य प्रिया सूहवदेवि नाम्नी तयोरभूतां च सुतौ गुणाढ्यौ ॥१२॥

प्रथमोऽत्र प्रथिमसिंहः पाल्हणसीहो द्वितीयकः ।
सूनुस्तस्य च पाल्हणादेव्यां लींबा-आंबाभिधौ तनयौ ॥ १३ ॥

अथ प्रथिमसिंहस्य सौवर्णिकशिरोमणेः । प्रिया प्रीमलदेवीति पुण्यप्रेमपराऽजनि ॥ १४ ॥
तयोश्च तनयाः पंच सदाचारधुरंधराः । स्वावदातशतैर्भूमिसुस्थिरीकृतकीर्त्तयः ॥ १५ ॥
सोमा-रतनसिंहाक-साल्हा-डूंगरसंज्ञिताः । तेषु सोमाभिधानस्य सौम्यत्वादिगुणांबुधेः ॥ १६ ॥
भार्यायां साजणदेव्यां चत्वारः सन्ति सूनवः । सद्गुणा नाराण-वाछा-गोधा-राघव-संज्ञिताः ॥ १७ ॥

रत्नो द्वितीयोऽजनि सिंहयुक्तो दानाम्बुशीतीकृतभूरिलोकः ।
संघाधिपत्वं विमलाचलादि-श्रीतीर्थयात्राकरणाद्य आप ॥ १८ ॥

प्रियायां रतनदेव्यामस्य पुत्रा गुणास्त्रयः । धनः सायर नामा च सहदेवस्तृतीयकः ॥ १९ ॥

तृतीयकस्तस्य सुतोऽस्ति सिंहाभिधः सुधीरोपनृमानमात्रम् ।
गुणाः प्रभूतप्रतिभाप्रभाद्या व्यधुस्तरां यत्र दृढानुबन्धम् ॥ २० ॥

श्री[म]द्जयानंदगुरुसूरिश्रीदेवसुंदरगुरूणां । सूरिपदमहश्चक्रे येन महान् खंद्रिभुवनाब्दे (१४२०) ॥ २१ ॥
तस्य च सहचारिण्यः पुण्याचरणैकमानसास्तिस्रः । सोषलदेवी-दुल्हादेवी-पूजीति विख्याताः ॥ २२ ॥

---

* इयं प्रशस्तिः पत्तने संघवीपाडागतभाण्डागारे विद्यमानपञ्चाशकवृत्तिपुस्तकप्रान्ते लिखिता लभ्यते । ताडपत्रीय-पुस्तकस्यान्तिमपत्र-विनष्टत्वात् प्रस्तुतप्रशस्तिरपूर्णरूपा एवोपलब्धाऽस्माभिः ।

अंत्यभार्याद्वयोत्पन्नौ तस्य द्वावंगसंभवौ । आद्य **आसधरो** नाम **नागराजाह्वयो**ऽनुजः ॥ २३ ॥
तूर्योऽथ **साल्हा**भिध आत्मबंधुर्भक्तिस्वभावार्जवधैर्यभूमिः ।
तस्य प्रिया पुण्यपराऽस्ति **हीरादेवी** तयोः सप्त सुताश्च सन्ति ॥ २४ ॥
इह **देवराज-शिवराज-हेमराजाश्च खीमराजश्च । भोजाख्यो गुणराजो वनराज**श्चेति गुणभाजः ॥२५॥
इतश्च–सर्वकुटुंबाधिपतेः **सिंहस्या**देशतस्**तमालिन्यां । स्तंभनका**धिपचैत्ये **भूं-चतुरुदधीन्दु**संख्येऽब्दे ॥२६॥
**धनाक-सहदेवाभ्यां** चक्रे सूरिपदोत्सवः । श्री**ज्ञानसागरा**ख्यानां सूरीणां हर्षितावनिः ॥ २७ ॥
तथा सौवर्णिकश्रेष्ठाश्चक्रुः सूरिपदोत्सवम् । महर्घ्या **लखमसिंहो रामसिंहश्च गोवलः** ॥ २८ ॥
**द्विर्वार्धियुगभूर्वर्षे** ( १४४२ ) प्रीणिताशेषभूतलं । श्री**कुलमंडना**त्सूरिश्री**गुणरत्न**संज्ञिनाम् ॥२९॥ [ युग्मम् ]
अत्र **साल्हकुटुंबस्य** प्रस्तुते नामवर्णने । तस्य स्वजनानामपि किंचिन्नामाद्यलिख्यत ॥ ३० ॥
ततः सौवर्णिकोत्तंस**साल्हा**भार्याविशुद्धधीः । शीलादिभिर्गुणैः ख्याता **हीरादेवी**ति संज्ञिता ॥ ३१ ॥
सौवर्णिकशिरोरत्न**लूंढा-लाषणदेवि**जाः । **शत्रुंजया**दियात्राभिः पुण्योपार्जनसादराः ॥ ३२ ॥
श्री**सोमतिलक**सूरीश्वर.......................... । ...................................... ॥

× × [ असमाप्तरूपा इयं प्रशस्तिः ] × ×

# [ ४१ ]

## प्राग्वटवंशीय-साऊश्राविका-लेखित-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १४४४ विक्रमाब्द ]

**प्राग्वाटवंशे** प्रवरे पृथिव्यां **देदा**वरः श्रेष्ठीवरो बभूव । **वसा**भिधानश्च तदंगजन्मा तस्यापि **मोषे**त्यभिधस्तनूजः ॥१॥
तस्य च **जेतलदेवी** जाया पुत्रश्च **मल[य]सिंहा**ख्यः । यो देवगुरुषु भक्तो **गे ( हे ? ) रंडक**नगरमुख्यतमः ॥२॥
तस्य च भार्या **साऊ** धर्मासक्ता सुशीलसंयुक्ता । यस्याश्च **मलयसिंहो मोहणदेवी** च खलु पितरौ ॥ ३ ॥
तस्याश्च पंचतनया **जूठिल-सारंग-जयतसिंहा**ख्याः । सहिताश्च **षेतसिंहा**भिध-**मेघाभ्यां** च सुगुणाभ्यां ॥४॥
पुत्र्यस्तथा च **देऊ सारूधरणूष्टमूश्च पांचूश्च । रूडी मानू** नाम्नी सप्तैते सुशीलगुणयुक्ताः ॥ ५ ॥
श्रीमत्**तपागणा**धिपसूरि श्री**देवसुंदरगुरूणाम्** । उपदेशतोऽथ सम्यग् धर्माधर्म्मौ परिज्ञाय ॥ ६ ॥
**साऊ** सुश्राविकासौ पुत्रपुत्रीपरीवृता । पत्यु**र्मलयसिंहस्य** श्रेयसे शुद्धवासना ॥ ७ ॥
**ज्योतिःकरंडविवृत्तिं तीर्थकल्पांश्च** भूरिशः । **चैत्यवंदनचूर्ण्यादि** श्रीताडपुस्तकत्रये ॥ ८ ॥
**पत्तनेऽणहिलाह्वाने वार्द्धिवार्द्धिविधिभूमिते** ( १४४४ ) । वत्सरे लेखयामास **नागशर्म्म**द्विजन्मना ॥ ९ ॥ छ ॥
एषां संबंधिना **मोषा**भिधश्राद्धेन धीमता । **पाता-देदी**तनूजेन लेखितेयं सुपुस्तिका ॥ १ ॥

# [ ४२ ]

## प्राग्वाटज्ञातीय-श्राविका-कडू-लेखित-सुदर्शनाचरित्र-पुस्तकप्रशस्तिः† ।

[ लेखनकाल १४५१ विक्रमाब्द ]

**संवत् १४५१ वर्षे श्रावण सुदि ५ गुराव**द्येह श्री**स्तंभतीर्थे** श्री**सुदरसणा**चरित्रं लिखापितमस्ति ॥

* एतत्प्रशस्तियुक्तं ताडपत्रात्मकमावश्यकसूत्रपुस्तकं पत्तने संघवीपाडासत्कभाण्डागारे विद्यमानमस्ति ।

† ताडपत्रीयमिदं पुस्तकं पत्तने संघवीपाडास्थितभाण्डागारे सुरक्षितमस्ति ।

**प्राग्वाटान्वय**भूः प्रभूतविभवोऽभूद्**धर्मसिंहा**भिधः, श्राद्धः श्रीजिननाथपूजनपरः पुण्यक्रियातत्परः ।
भार्या तस्य **कडूदे**यैकरसिका सद्धर्मबद्धादरा·····························॥ १ ॥
चत्वारस्तनयास्तयोः समभवन्नेते युताः सद्गुणैः, **धांगा**ख्यः प्रथमः पृथूज्ज्वलयशा **बांबा**भिधानोऽपरः ।
पुण्योपार्जनलालसो **लषमसी**त्याख्या प्रतीतस्तत-स्तुर्यो **रावण**नामधेयविदितः सुश्राद्धवर्गाग्रणीः ॥ २ ॥
ग्रामे **फीलणि**नामके निवसतामेषां सवित्री **कडू**-रेषा लिख···························· ।
·····················विततश्रीमत्**तपागच्छ**पा-चार्यश्री**देवसुंदर**महापुण्योपदेशाद्दिदम् ॥ ३ ॥
**क्षोणी[१]-बाण[५]-पयोनिधि[४]-क्षिति[१]**मिते संवत्सरे **वैक्रमे**, रम्ये श्री**अणहिल्ल**नामनगरे श्रीज्ञानकोशेऽनघे ।
अस्थाप्यत्र **सुदर्शना**भिधमहासत्याश्चरित्रं तया, नित्यं नंदतु वाच्यमान·····························॥ ४ ॥

[ शुभं भवतु लेखकपाठ– ] कयोः ॥ छ ॥

# [ ४३ ]

## प्राग्वाटज्ञातीय-श्रा० प्रीमलदेवी-लेखित-सूत्रकृताङ्गटीका-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १४५४ विक्रमाब्द ]

–समाप्ता चेयं सूत्रकृतद्वितीयांगस्य टीका । कृता चेयं **शीलाचार्येण वाहरिगणि**सहायेन ॥
यदवाप्तमत्र पुण्यं टीकाकरणे मया समाधिभृता । तेनापेततमस्को भव्यः कल्याणभाग्भवतु ॥

–ग्रंथाग्रं० १३९५० । **संवत् १४५४ वर्षे माघशुदि १३ सोमे**ऽद्येह श्री**स्तंभतीर्थे** लिखितमिदं पुस्तकं चिरं नंदतात् ॥ शुभं भवतु ॥

श्री**कायस्थ**विशालवंशगगनादित्योऽत्र **जाना**भिधः, संजातः सचिवाग्रणीर्गुरुयशाः श्री**स्तंभतीर्थे** पुरे ।
तत्सूनुर्लिखनक्रियैककुशलो **भीमा**भिधो मंत्रिराट्, तेनाऽयं लिखितो बुधावलिमनःप्रीतिप्रदः पुस्तकः ॥ १ ॥
यादृशं पुस्तके दृष्टं तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥

॥ शुभं भवतु श्रीसंघस्य लेखकपाठकयोश्च ॥

॥ ॐ ॥ नमः श्रीसर्वज्ञाय ॥

**प्राग्वाट**वंशमुकुटः श्रेष्ठी **गंगा**भिधः समजनिष्ट । अधरयति स्म धरायां धनदं यः स्वीयधननिचयैः ॥ १ ॥
एतस्य विशदशीला जज्ञे पत्नी च **गउरदे**नाम्नी । निःसीमरूपसंपल्लक्ष्मीरिव वासुदेवस्य ॥ २ ॥
**प्रीमलदेवी**संज्ञा सकर्णजनवर्णनीयगुणकलिता । अभवन् तयोस्तनूजा जिनपूजाध्यानतच्चित्ता ॥ ३ ॥
विमलतमशीलसुभगा नूनं या स्वीयशुद्धचरितेन । चिरवीतामपि सीतां निरंतरं स्मारयत्येव ॥ ४ ॥
तामुपयेमे सुकृती **भूभड** इति विश्रुतो विशदबुद्धिः । ठक्कुर**काला**-भार्या**संभलदेवी**प्रसूततनुजन्मा ॥ ५ ॥
श्रीजैनशासननभोभानुश्री**देवसुंदर**गुरूणाम् । **प्रीमलदेवी** साऽथ श्रुत्वा पीयूषदेश्यमुपदेशम् ॥ ६ ॥
मत्वाऽसारतरं धनं धनफलं लिप्सुर्निजश्रद्धया, **वेद[४]ेषू[५]दधि[४]-शीतदीधिति[१]**मिते ( १४५४ ) संवत्सरे **वैक्रमे** ।
लक्ष्मीवैश्रवणातिशायिजनते श्री**स्तंभतीर्था**भिधे, द्रंगेऽलीलिखदेतदद्भुततमं श्रीसूत्रकृत्पुस्तकम् ॥ ७ ॥
आचंद्रादित्यमेतद्विरचितचतुरानंदसंपद्विशेषं, संख्यावद्भिर्मुनींद्रैरहमहमिकया वाच्यमानं वितंद्रैः ।
उद्यद्दुःखातिरेकाकुलनिखिलजगज्जीवजीवातुकल्पं, श्रेयःश्रीहेतुभूतं प्रवचनमनघं जैनमेतच्च जीयात् ॥ ८ ॥

* ताडपत्रात्मकं पुस्तकमिदं पत्तने संघसत्कभाण्डागारे विद्यते । द्रष्टव्यम्–पिटर्सन् रीपोर्ट, पुस्तक ५, पृ० ७१ ।

# [ ४४ ]

## श्रीमालवंशीय-श्रे०मेलिग-लेखित-पार्श्वचरित्र-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १४५५ विक्रमाब्द ]

**पंच-पंच-मनुसंख्यवत्सरे** ( १४५५ ) पौषमुख्यसुतिथौ दिने विधोः ।
श्रीमति प्रथितपत्तने पुरे लेखकेन लिखितं सुपुस्तकं ॥ १ ॥
**श्रीमालवंशे** कमलावतंसे श्रेष्ठी पुराऽभूद् भुवि **वीरपालः** ।
देवे गुरौ चाद्भुतभक्तियुक्तः ख्यातो गुणैश्चन्द्रकराभिरामैः ॥ २ ॥
पुण्यैकपात्रं तत्पुत्रो **नरसिंहो**ऽभवत्सुधीः । **हीमादेवी** प्रिया तस्य प्रशस्यगुणशालिनी ॥ ३ ॥
तयोः सुतौ **धूलिग-मेलिगौ** च सदा सदाचारविचारवीरौ । सद्धर्मशास्त्रश्रवणैकचित्तौ जीयाच्चिरं पूर्णशशांककीर्ती(?)॥४॥
**मेलादेवी** तत्प्रिया भाति सौभाग्यश्रीर्गेहधर्मकार्ये नियुक्ता । भक्ता देवे सद्गुरौ चातिनम्रा गेहस्यांतर्जंगमा कल्पवल्ली॥५॥
श्री**नागेंद्रगणे**ऽगण्यपुण्यसंभारभूषिते । **श्रीपद्मचंद्रसूरीन्द्रः** प्रबभूव गुणैकभूः ॥ ६ ॥
तत्पट्टपूर्वाचलभास्करः **श्रीरत्नाकरः** सूरिवरो बभूव । पट्टेऽस्य **रत्नप्रभसूरि**रेषः श्रीमान् जयी निर्जितकामवीरः ॥ ७ ॥
तत्पदे जयति जंगमतीर्थं **सिंहदत्तगुरु**रेष गुणाढ्यः । यः सतां प्रथमकः किल कार्ये चंद्रगौरयशसा प्रसृतश्च ॥ ८ ॥
श्रीमते **सिंहदत्ताय** शुद्धचित्ताय सूरये । न्यायोपार्जितवित्तोऽयं **मेलिगः** श्रावकाग्रणीः ॥ ९ ॥
**पार्श्वनाथचरित्र**स्य प्रददौ पुस्तकं शुभं । **मेलादे**व्यपि तत्पत्नी श्री**कल्पस्य** च पुस्तिकां ॥ १० ॥

शुभं भवतु ॥ लेखकपाठकयोः ॥

# [ ४५ ]

## प्राग्वाटवंशीय-श्राविका-आल्हू-लेखित-पञ्चाङ्गीसूत्रवृत्ति-पुस्तकप्रशस्तिः† ।

[ लेखनकाल १४५५ विक्रमाब्द ]

**संवत् १४५५ वर्षे ज्येष्ठ शुदि ३ गुरू** पंचांगीसूत्रवृत्तिपुस्तकं लेखयांचक्रे ॥
श्री**कायस्थ**विशालवंशगगनादित्योऽत्र **जाना**भिधः, संजातः सचिवाग्रणीर्गुरुयशाः **श्रीस्तंभतीर्थे** पुरे ।
तत्सूनुर्लिखनक्रियैककुशलो **भीमा**भिधो मन्त्रिराट्, तेनायं लिखितो बुधावलिमनःप्रीतिप्रदः पुस्तकः ॥ १ ॥

॥ शुभं भवतु श्रीसंघभट्टारकस्य ॥

**प्राग्वाट**वंशमुकुटः प्रकटप्रतिष्ठः श्रेष्ठी बभूव भुवि **लाषण** इत्यभिख्यः ।
शीतांशुरश्मिवरभासुरकीर्तिसारैर्यः सर्वतोऽपि धरणिं धवलीचकार ॥ १ ॥
एतत्पाणिगृहीति **साऊ**रिति विश्रुता विशदशीला । जिनवचनबद्धरंगा या गङ्गामनुकरोति निजचरितैः ॥ २ ॥
**आल्हू**रित्यभिधाना सकर्णजनवर्णनीयगुणनिवहा । अभवत्तयोस्तनूजा जिनादिपूजाविधानरता ॥ ३ ॥

---

* ताडपत्रात्मिकैषा पुस्तिका पत्तने संघसत्कभाण्डागारे विद्यते ।

† एतत्प्रशस्तिसमन्वितं ताडपत्रात्मकं पञ्चोपाङ्गवृत्तिपुस्तकं पत्तने संघवीपाडास्थितभाण्डागारे विद्यते ।

तासुपयेमे सुकृती मन्त्रिवरो **वीरमो** विशदबुद्धिः । धीसखशतमख**वीदा-चांपलदेवी**प्रसूततनुजन्मा ॥ ४ ॥

सत्पात्रदानसफलीकृतभूरिवित्ता श्रीधर्मकर्मकरणप्रवणैकचित्ता ।
या स्वैर्विशुद्धचरितैर्विदुषामदोषश्लाघास्पदं समजनिष्ट लसत्प्रतिष्ठा ॥ ५ ॥

श्रीमत्**तपागण**नभोङ्गणसूरसूरि-श्री**देवसुंदर**गुरुप्रवरोपदेशं ।
श्रुत्वा सुधासममसीमगुणासमाना सा श्रावकाचरणचारुरताऽथ **आल्हूः** ॥ ६ ॥

मत्वाऽसारतरं धनं धनफलं लिप्सुर्निजश्रद्धया, **वेदेषूदधि-शीतदीधिति** ( १४५४ ) मिते संवत्सरे **विक्रमे** । लक्ष्मीवैश्रवणातिशायि जनते श्री**स्तंभतीर्था**भिधे, द्रंगेऽलीलिखदेतदद्भुततमं पञ्चाङ्गिकापुस्तकम् ॥ ७ ॥

आचंद्रादित्यमेतद्विरचितचतुरानन्दसंपद्विशेषं, संख्यावद्भिर्मुनीन्द्रैरहमहमिकया वाच्यमानं वितन्द्रैः । उद्यद्दुःखातिरेकाकुलनिखिलजगज्जीवजीवातुकल्पं, श्रेयःश्रीहेतुभूतं प्रवचनमनघं जैनमेतच्च जीयात् ॥ ८ ॥

॥ शुभं भवतु श्रीसंघस्य ॥ छ ॥

# [ ४६ ]

## प्राग्वाटज्ञातीय-रूपलश्राविका-लेखित-पद्मचरित्र (प्रा० पउमचरिय) पुस्तकप्रशस्तिः* ।

[ लेखनकाल १४५८ विक्रमाब्द ]

–इति पद्मचरित्रं समाप्तमिति ॥ छ ॥ ग्रंथाग्रं ॥ १०५०० ॥

**संवत् १४५८ वर्षे प्रथमभाद्रपदशुदि ८ अष्टम्यां रवौ** श्री**पत्तने पद्मचरित्रं** लिखितं ॥ छ ॥ श्रीशिवमस्तु ॥ श्रीः ॥

**प्राग्वाट**ज्ञातीयः श्रेष्ठी **वीरा**भिधः सुकृतनिष्ठः । कीर्तिप्रथापथिष्ठः शिष्टप्रष्ठोऽजनि गरिष्ठः ॥ १ ॥
प्रभूतपुण्यार्जनसावधानस्तस्यांगजोऽभूद् **वयजा**भिधानः । गुणैरनेकैरिह निस्समानः परोपकारप्रथनैकतानः ॥ २ ॥

**माऊ**संज्ञा तस्य भार्या विधिज्ञा जज्ञे धन्याऽगण्यपुण्यप्रवीणा ।
कीर्तिस्फीता सर्वदोदारचित्ता रेखाप्राप्ता स्त्रीषु शीलोत्तमासु ॥ ३ ॥
चत्वार एते तनयास्तदीया जाता धनाढ्याः सुकृतावदाताः ।
**तेजा**भिधो भद्रक**भीमसिंहः संपूर्णसिंहो** भुवि **पद्मसिंहः** ॥ ४ ॥

सुता तथा **रूपल**नामधेया गुणैरमेया शुभभागधेया । यस्याः पितृव्यातनुनात्रकेण श्रीम**ज्जयानंद**मुनींद्रचंद्राः ॥ ५ ॥
आबालकालादपि पुण्यकार्यभारैकताना करुणार्द्रचित्ता । देवे गुरौ भक्तिमती सतीद्धा सदा तपःकर्मणि कर्मठा या ॥ ६ ॥

श्रीमत्**तपागण**नभोंगणभानुकल्पश्री**देवसुंदर**गुरुप्रवरोपदेशात् ।
**नंदेषु-वारिधि-शशांक**मिते प्रतीते संवत्सरे वहति **विक्रम**भूपतीये ( १४५९ ) ॥ ७ ॥

श्रीमत्**पद्मचरित्रं** बहुना द्रविणेन लेखयित्वेदं । श्री**पत्तनीय**कोशे निवेशयामास सा सिद्धयै ॥ ८ ॥
मोक्षाध्वनीनसाधूनां ज्ञानसत्रोपमं परं । आचंद्रार्कमिदं जीयात्पुस्तकं प्रास्तदूषणं ॥ ९ ॥

---

* एतत्प्रशस्तियुक्तं ताडपत्रीयपुस्तकं पत्तने संघवीपाडास्थभाण्डागारे विद्यते ।

# [ ४७ ]

## [ प्राग्वाटज्ञातीय ] धर्मश्रेष्ठि-लेखित-लक्षग्रन्थमान-आगमपुस्तक-प्रशस्तिः* ।

[ लेखनकाल १४७४ विक्रमाब्द ]

**–संवत् १४७४ वर्षे मार्ग शुदि ६ रवौ** लिखितं विप्रेण **नागशर्म्मणा** श्रीमद**णहिल्लपत्तने** ॥ शिवमस्तु ॥

.................................... । .............................. ॥ १ ॥

प्रथमो **नरपाला**ख्यो **धनसिंहो** द्वितीयकः । तार्तीयीकस्तु **षेता**ह्व एते [सु]भ्रातरस्त्रयः ॥ २ ॥

**लक्षस्य झबकू** नाम्नी पत्नी धर्मपरायणा । सतीमतल्लिकाशीलविशुद्धजलतल्लिका ॥ ३ ॥

**झबकू-लक्षयो**र्जज्ञे तनयो विनयोज्वलः । ज्ञातः श्रीमद्धर्ममर्मा **धर्मा**ह्वः शुद्धधीनिधिः ॥ ४ ॥

तस्य भार्या गुणैरार्या धर्मकर्मपरायणा । **रत्नू** नाम्नी शुद्धशीला विशुद्धहृदया सदा ॥ ५ ॥

.................................... । .............................. ॥ ६ ॥

तप्यतेऽ**जितचूला** सा रंगसंवेगभूषणम् । तपोऽतिदुस्तपं पापपंकशोषणपूषणम् ॥ ७ ॥

वैराग्यासपरितुष्टो विनयादिगुणालयः । **विनयानंद**नामास्य बंधुः साधुशिरोमणिः ॥ ८ ॥

श्रेष्ठी **धर्मा**भिधो धर्मकर्मकर्मठमानसः । अजिह्मं ब्रह्मचर्यं यो यौवनेऽप्युदचीचरत् ॥ ९ ॥

चतुर्विंशतिकृत्वा यः पंचशक्रस्तवैर्जिनान् । प्रत्यहं वंदते भूरिभक्तिव्यक्तितरंगितः ॥ १० ॥

.................................... । .............................. ॥ ११ ॥

.............................. । देवालयादिसामग्र्या कृतयात्रामहोत्सवौ ॥ १२ ॥

**कर्मणो लक्ष्मसिंह**श्च प्रसिद्धौ पुण्यकर्मभिः । **गोधा-लिंबादि**पुत्राढ्यौ संघेशौ यस्य मातुलौ ॥ १३ ॥

साधर्म्मिकाणां प्रति सद्मरूप्यटंकान्वि[तं]मोदकमर्प्पयन् यः । अभ्यर्च्य संघेन समं गुरूंश्च श्रीदर्शनोद्यापनमाततान ॥१४॥

चैत्ये श्रीआदिदेवस्य श्री**देवकुलपाटके** । कुलोद्द्योतकरो देवकुलिकां यो व्यधापयत् ॥ १५ ॥

इतश्च–श्री**तपागच्छ**क्षीरार्णवसुधाकराः । जयंति गुरवः श्रीमत्**सोमसुंदर**सूरयः ॥ १६ ॥

तेषां गुरूणामुपदेशवाचं निशम्य सम्यग् वरवासनाढ्यः ।
स लेखयन् **लक्षमितं** जिनेंद्रागमं वसुं पुस्तकमप्यलीलिखत् ॥ १७ ॥

॥ शुभं भवतु ॥

# [ ४८ ]

## प्राग्वाटवंशीय-धर्मश्रेष्ठि-लेखित-लक्षद्वयग्रन्थमान-पुस्तकप्रशस्तिः† ।

[ लेखनकाल १४७९–८१ विक्रमाब्द ]

**–संवत् १४७९ वर्षे वैशाषवदि ४ गुरौ** ॥ इष्टदेवताभ्यो नमः ॥

श्रीमज्जिनेश्वरविहारविराजमानं सद्धर्म्मकर्म्मठजनव्रजलब्धमानम् ।
सौवश्रिया प्रतिहतान्यपुराभिमानं ख्यातं **हडाद्र**नगरं जयति प्रधानम् ॥ १ ॥

* पत्तने संघवीपाडास्थितभाण्डागारे विद्यमान-ताडपत्रात्मक-राजप्रश्नीयोपाङ्गवृत्तिपुस्तकप्रान्ते इयं प्रशस्तिर्लिखिता लभ्यते ।

† पत्तने संघवीपाडासत्कभाण्डागारे एकं ताडपत्रात्मकं [ प्राकृतभाषामय ] पद्मप्रभचरितपुस्तकं विद्यते, तत्प्रान्तभागे इयं प्रशस्तिर्लिखिता लब्धा ।

तत्रोच्चत्यविशेषशालिनि गिरिप्रासप्रतिष्ठे शुभ-च्छाये पर्वशतप्रशस्तविभवे **प्राग्वाटवंशे** ध्रुवम् ।
**लाषाह्वः** प्रबभूव मौक्तिकमणिः सद्वृत्तभावं श्रितः, श्रीमान् सज्जनमंडनं शुचिरुचिस्त्रासादिदोषोज्झितः ॥ २ ॥
तमोविजेतुः पुरुषोत्तमस्य सुदर्शनश्रीकलितस्य तस्य । पद्मासनाभोगविलासदक्षा प्रिया गुणाढ्याऽजनि **लक्ष्मिदेवी** ॥३॥
तत्तन्निर्मलधर्म्मकर्म्मनिरतो **धर्मा**भिधानस्तयोः, संजातस्तनयः प्रशस्यविनयः श्रीमान्निरस्तानयः ।
आश्चर्यं प्रतिपद्यपि प्रतिकलं साकल्यनैर्मल्यभाक्, यस्य स्पष्टमदीप्यत रुचिर्न्निश्शेषनश्यत्तमाः ॥ ४ ॥
षष्ठाष्टमादिकविचित्रतपोविधानकावर्णनाऽस्य ननु पुष्यति कामभिल्ल्यां ।
संसारसागरतरंडमखंडभावः संसारतारणकृतं कृतवान् कृती यः ॥ ५ ॥
श्रीमान्वयस्थो दयितान्वितोऽपि च ब्रह्मव्रतं वत्सरपंचविंशतिम् ।
स एष यावत्कथिकं प्रपालयन् न विस्मयं कस्य मनस्यवीविशत् ॥ ६ ॥
श्रीशक्रस्तवपंचकादिविधिना वारांश्चतुर्विंशति-स्तन्वानो जिनवंदनं प्रतिदिनं यावद् भवाभिग्रहात् ।
सम्यक्त्वस्य सुधीः शतत्रयमितैर्यो राजतैष्टंककैः-रन्तर्मोदकमाहितैर्विहितवानुद्यापनं पुण्यवान् ॥ ७ ॥
इमं सती चक्रशतक्रतू **रतू**रतूतुषन्निस्तुषशीलभृत्प्रिया ।
गुणा यदीया हृदयंगमाः सतां श्रयंत्यजस्रं श्रवणावतंसताम् ॥ ८ ॥
इतश्च—श्रीम**त्तपागण**नभोऽङ्गणभास्कराणां सिद्धांतवारिधिविगाहनमंदराणाम् ।
श्री**देवसुंदर**गुरूत्तमपट्टभाजां श्री**सोमसुंदर**मुनीश्वरसूरिराजाम् ॥ ९ ॥
पीयूषदेश्यामुपदेशभारतीं निशम्य सम्यक् श्रुतभक्तिभावितः ।
ग्रन्थं स लक्षद्वयमानमात्मनः पुण्याय धन्यः स्वधनेन लेखयन् ॥ १० ॥
**सोमवर्सुमंनु ( १४८१ ) मिते**ऽब्दे श्रीचित्कोशे व्यलीलिखन्मोदात् ।
*........................................ ॥ ११ ॥ त्रिभिर्विशेषकम्
यावद् व्योमातपत्रे ग्रहमणिखचिते मेरुसौवर्णदण्डे, श्रीधर्मस्याधिभर्तुर्भ्रमति वरनभोरत्ननीराजनेयं ।
तावत्तत्त्वार्थसार्थामृतरसजलधिर्नंदतात्स्वस्तिशाली, ग्रन्थोऽयं वाच्यमानः सहृदयहृदयानंदकंदांबुदः श्रीः ॥ १२ ॥

# [ ४९ ]

## श्रीमालवंशीय-भ्रातृयुगल-श्रेष्ठिगोविन्द-नगराज-लेखितागमादि-नानापुस्तकप्रशस्तिः† ।

[ लेखनकाल १४७९-८० विक्रमाब्द ]

[नंदीसूत्रटीकाप्रांते—] इति श्री**मलयगिरि**विरचिता **नंद्यध्ययनटीका** समाप्ता । छ । ग्रंथाग्रं ७७३२ । सूत्रग्रं ७०० । छ । शुभं भवतु मंगलमस्तु समस्तसंघस्य । छ ।

श्रीसर्वविदे नमः ।

पुरंदरपुरस्फाति भाति श्री**पत्तनं** पुरं । धर्म्मन्यायमये यत्र नित्यं लोकस्सुखायते ॥ १ ॥
विभाति गांभीर्यगुणेन नानाराजाप्तवृद्धिजडभावमुक्तः । राजन्ननेकैः पुरुषोत्तमैः **श्रीमालवंशां**बुनिधिर्नवीनः ॥ २ ॥

---

* अस्य पद्यस्योत्तरार्द्धो मूलादर्शे पतितः प्रतिभाति ।

† एतत्प्रशस्तिसमन्वितानि ताडपत्रमयानि पुस्तकानि पत्तने संघवीपाडासत्कभाण्डागारे विद्यन्ते ।

तस्मिन्समग्रव्यवहारिरत्नमप्रत्नधामानुपमानकीर्त्तिः । निर्दूषणः सद्गुणधाम धर्ममयैककर्माऽजनि **कर्मसिंहः** ॥ ३ ॥
प्रियाऽस्य **गोई**त्यभिधा सुधासदृग्वचःप्रपंचा समजायताऽद्भुता ।
विशुद्धशीलादिगुणैरनुत्तरैर्या सीतया स्वं तुल्यां बभूवुषी ॥ ४ ॥

तदंगभूर्भूरिसमृद्धिधाम महेभ्यसीमाऽजनि **मालदेवः** । बुधा अबुध्यंत भवांबुधे(?)ऽयं धनेश्वरस्य प्रतिबिंबमेव ॥ ५ ॥
श्री**गूर्जरेश्वर**नियोगिनि **रत्नपाले** तद्ग्राहयत्यपि बलेन जनं समग्रं ।
नैकादशीव्रतमधा बहुधा प्रकारैस्तद्भापितोऽपि दृढदर्शनधीस्सुधीर्यः ॥ ६ ॥

अहो अनेकैः सुकृतोत्सवैर्जनं सदैकधर्मात्मकतां नयन्नपि । अनंतधर्मात्मकवस्तुदेशिनो जिनेशितुश्शासनमत्यजन्न यः ॥७॥
जगदंतगता विमुक्तवत् ध्रुवमानंत्यजुषोऽपि यद्गुणाः । ग्रहचक्रमिव स्थिरा अपि क्रममाणाश्च जगत्सु कौतुकं ॥८॥
श्री**देवसुंदर**युगोत्तमसेवयास्तश्रीमज्जिनागमविचारमहारहस्यः ।
नंदीश्वरस्तवनमुद्यतरान्नवातीचारांश्च यो निरुपमानमतिश्चकार ॥ ९ ॥

षड्विधान्यहरहः कुरुते सावश्यकानि कलिकालविजेता । यो यथोचितमथो धनदानैर्दीनलोकमुददीधरदेव ॥ १० ॥
श्रीतीर्थयात्रा-जिनबिंब-साधुपूजा-प्रतिष्ठादिविधानधीरः । सदापि साधर्मिकवत्सलत्वदानादिधर्मैरजयत्कलिं यः ॥ ११ ॥

अथ च–

संघभारधरणैकधुरीणाः धर्मकर्मसु न कदापि न रीणाः । नित्यदेवगुरुभाक्तिकचित्ताः क्षेत्रसप्तकनियोजितवित्ताः ॥ १२ ॥
भूतलप्रथितकीर्तिसमूहाः पूरितार्थिजनसर्वसमीहाः । भूरिभूतिपरिभूतधनेशास्तेजसा च जितबालदिनेशाः ॥ १३ ॥
मर्त्यलोकहितहेतुकमिंद्र-प्रेषिता इव दिवः सुरवृक्षाः । पंच तस्य तनया विनयाढ्या भूरिभाग्यविभवा विजयंते ॥ १४ ॥
आसीज्जनाल्हादकमूर्तिराद्यः **केल्हा**भिधस्तेषु धियां निधानम् ।
प्रभावकालंकरणस्य यस्य दशाप्यशोभंत दिशो यशोभिः ॥ १५ ॥
आस्ते जगत्ख्यातयशा द्वितीयो **हीरा**भिधानो व्यवहारिहीरः ।
रमांबुधेस्तस्य गुणास्तरंगा इवास्तसंख्या जगतीं स्पृशंति ॥ १६ ॥

निखिलव्यवहारिवर्गमौलि**र्वीराकः** सुकृती सुतस्तृतीयः । कलयत्यधुना प्रयत्नशीलः श्रेष्ठीन्दोरुपमां सुदर्शनस्य ॥ १७ ॥
भक्तः श्रीगुरुपदयोः सदापि धर्माधारः श्रीजिनपतिशासनप्रभाकृत् ।
त्रैलोक्यप्रथितयशा विशां प्रधानं **पाताकः** समजनि तत्सुतश्चतुर्थः ॥ १८ ॥
सन्नंदकः स्फुटविराजिसुदर्शनश्रीर्लक्ष्मीविलासवसतिः पुरुषोत्तमोऽत्र ।
तस्यांगभूर्जयति पंचमकः क्षमायां **गोविंद** इत्यभिधया विदितो गुणैश्च ॥ १९ ॥

यौवनेऽपि दधता किल शीलं येन धीरपुरुषाचरितेन । सारितः सररिपुः परिभूय स्थूलभद्रमुनिवृत्तमिदानीं ॥ २० ॥
**केल्हा**भिधानस्य जनी विनीता ख्यातास्ति **हर्षू**रिति यत् हृदुर्व्यां ।
धर्मद्रुमः श्रीगुरुदेवभक्तिरसैः प्रवृद्धः फलतीप्सितोघैः ॥ २१ ॥

चतुरंबुधिवारिकीर्त्तयश्चतुराशाजनतामनोमताः । तनुजा मनुजालिमंडनं चतुरास्संति चतुर्मितास्तयोः ॥ २२ ॥
व्यवहारिवर्गमंडनमखंडदानादिधर्मविधिनिरताः । **डाहा भोला मंडन माणिक्ये**ति क्रमाद्विदिताः ॥ २३ ॥
जगदद्भुतसौंदर्ये भार्ये **हीरा**भिधस्य जयतो द्वे । आद्या **शाणी**नाम्नी **हीरादेवी** द्वितीया च ॥ २४ ॥
भाग्यदाक्ष्यविनयादिगुणाढ्यौ ते क्रमेण तनयावसुवातां । आदिमा **विजयकर्ण**सकर्णं भूरिभूतिमपरा च **गजाहं** ॥२५॥
मायादिदोषरहिता दयिता विभाति **वीरा**भिधस्य **फदकू**रनुकूलचित्ता ।
या यौवनेऽपि विमलं प्रतिपद्य शीलं योषासु धैर्यविरहापयशः प्रमार्ष्टि ॥ २६ ॥

सुतौ तयोर्भाग्यभृतौ विनीतौ प्रभूतभूती गुणभूरभूतां । आद्यः कृती नंदति **देवदत्त**स्तथा द्वितीयो **गुणदत्त**नाम ॥२७॥

**पाता**भिधान्नव्यवहारिमौलेरुभे अभूतां दयिते विनीते। तत्रादिमा सच्चरितैः पवित्रा **प्रतापदेवी** रतितुल्यरूपा ॥२८॥
अपरा **पद्मलदेवी** नित्यं श्रीवीतरागभक्तिपरा। तनुजौ मनुजौघवराविमे क्रमेणासुवातां द्वौ ॥ २९ ॥
श्रीजिनेंद्रपदपंकजभक्तः सर्वदा सुकृतकर्मसु सक्तः। आदिमो विजयते **नगराजः** कीर्तिपूरजितशारदराजः ॥ ३० ॥
**उदयराज** इति प्रथितोऽपरस्सकलपौरविभूषणमंगजः। जयति देवगुरूत्तमभक्तिकृन्नरमणी रमणीयगुणालयः ॥ ३१ ॥
**गोविंद**नाम्नो दयिताऽस्ति **गंगादेवी** सदा श्रीगुरुदेवभक्ता।
न जातु धर्मामृतशीतलं यन्मनः कलिस्तापयितुं समर्थः ॥ ३२ ॥
तयोर्जयंत्यब्धिमिताः सुताः श्रीपदं महाभाग्यभृतो विनीताः।
भृताश्चतस्रोऽपि दिशो यशोभिर्येषामशेषा हिमरुक्महोभिः ॥ ३३ ॥
आद्यो **हरिश्चंद्र** इति प्रतीतः सूनुर्द्वितीयः किल **देवचंद्रः**।
ततस्तृतीयो **जिनदास**नामा प्ररूढधामा गुरुदेवभक्तः ॥ ३४ ॥
अथ च—श्रीजैनशासनसमुद्धरणैकधीराः श्री**देवसुंदर**युगप्रवरा विरेजुः।
तेषां पदे जनमुदे विहितावताराः श्री**सोमसुंदर**गुरुप्रवरा जयंति ॥ ३५ ॥
निश्शेषलब्धिभवनं भुवनातिशायिमाहात्म्यधामभरतोत्तमसंयमाढ्याः।
किंचात्र सर्वगुणसुंदरशिल्पसीमाभूता जयंत्यधिजिनेश्वरशासने ये ॥ ३६ ॥
चत्वारः श्रीमदाचार्याः स्थापितास्तैर्युगोत्तमैः। एकपादपि यैर्धर्मश्चतुष्पादभवत्कलौ ॥ ३७ ॥
**शांतिस्तवेन** जनमारिहृतस्सहस्रनामावधानिबिरुदा महिमैकधामाः।
तेष्वादिमा विविधशास्त्रविधानधातृतुल्या जयंति **मुनिसुंदरसूरि**राजाः ॥ ३८ ॥
षट्त्रिंशता सूरिगुणैरलंकृतास्तथा द्वितीया विजयं वितन्वते।
जगच्छ्रुताः **कृष्णसरस्वती**ति सद्यशःश्रियः श्री**जयचंद्र**सूरयः ॥ ३९ ॥
व्यजयंत **महाविद्याविडंबन**प्रभृतिशास्त्रविवृतिकृतः। श्री**भुवनसुंदर**गुरूत्तमास्तृतीया यशोनिधयः ॥ ४० ॥
तुर्या जयंति जगतीविदिता निखिलांगपाठपारगताः। श्री**जिनसुंदर**गुरवः प्रज्ञाऽवज्ञातसुरगुरवः ॥ ४१ ॥
अतश्च—
गणाधिपश्रीगुरु**सोमसुंदर**प्रभूपदेशं विनिशम्य सुंदरम्। श्रुतस्य भक्तेरधुना जिनाधिपप्रवर्तमानागमलेखनेच्छया ॥४२॥
**गोविंद-नगराजाभ्यां** **नंद[९]-भ[२७]-मनु[१४]-वत्सरे**। लेखितः पुस्तको जीयादाचंद्रार्कं प्रमोददः ॥ ४३ ॥
॥ इति प्रशस्तिः* ॥

# [ ५० ]

## श्रीमालवंशीय-श्राविकालीली-लेखित-उपमितिकथासमुच्चय-पुस्तकप्रशस्तिः† ।

[ लेखनकालो नोल्लिखितः ]

नम्रोन्नम्रे यदसित्रपि जगति पदांगुष्ठपीडां प्रपन्नाणोद्रो(?) क्षुभ्यदब्धेर्विमलितममृतैरभ्रमुल्लोचतीदम्।
यत्ताराः स्वस्तिकंति क्षितितलमिलिता यस्य जन्मोत्सवे तत्कल्पोऽप्याकल्पकल्पः स नुदतु दुरितं वो महावीरदेवः ॥

---

* इयमेव प्रशस्तिरेतद्भाण्डागारसुरक्षितदशवैकालिकटीका-कल्पभाष्य-भवभावनावृत्त्यादिपुस्तकान्तेऽपि लिखिता लभ्यते। तत्र भवभावनावृत्तिप्रान्ते एष विशेषः पुष्पिकालेखो दृश्यते—

**संवत् १४८० वर्षे कार्तिक वदि १२ रवौ महं भीमासुत हरिदासेन लिखितं ॥ शुभं भवतु ॥**

† ताडपत्रीयं पुस्तकमिदं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यते। द्र० पिटर्सन् रीपोर्ट पुस्तक ३, पृ. ४।

भूभृत्प्रतिष्ठामधितिष्ठमानः **श्रीमालवंशो** न कुतोऽपि नीचः ।
संसेव्यमानोऽर्थिभिरुद्धतोऽप्यवष्टंभनाय प्रयतैः स जीयात् ॥
तस्मिन्नाम्नास्ति **वेल्लत्फल** इति कलिना यो बहिः कृत्य मुक्तस्तुच्छेनातुच्छमूर्त्तिः प्रणयिवितरणे कल्पशाखीव मर्त्यः ।
शंके पुण्यैकमार्गः कृतयुगसमयान्नास्ति पूर्वं तदसान्नो चेत्तत्संततिः किं सुकृतिशतकृतारंभरेखा च **लीली** ॥
मोक्षस्य हेतुः प्रथमस्तथा प्रत्यर्थितंत्रे श्रुतधर्म एषः । श्रेयोऽर्थमेषो**पमिति**र्व्यलीलिखल्ल**ीली** सुता तस्य पितुस्तदेतां ॥
संसारवार्धौ पततां जनानां स्फुरत्ययं हस्त इवाविमग्नः । आलंबनीयः श्रवणादिकृत्यै-र्विलेखितो ग्रन्थ इयं च शास्त्रिः ॥

# [ ५९ ]

## धर्कटान्वय-श्राविकाराज्यश्री-लेखित-[ देवचन्द्रसूरिकृत- ]शान्तिनाथचरित्र-पुस्तकप्रशस्तिः* ।

[ लेखनकालो न निर्दिष्टः, वर्णनानुसारेण १२ शताब्दयनुमीयते ]

श्री**विजयचंद्रसूरि**शिष्य श्री**यशोभद्रसूरि**शिष्य श्री**देवप्रभसूरी**णां सत्कं पुस्तकम् ।
प्राप्तो गोत्राधिपत्वं रसभरविलसन्नंदनारामरम्यः, सर्वस्याशाप्रकाशी सकलसुमनसां सेवनीयः सदैव ।
नानाकल्पागमानामुपचयजनको राजसम्मानभावं, प्राप्तः श्री**धर्कटा**नां प्रकटितगरिमा वंशमेरुः समस्ति ॥ १ ॥
सच्छायः सरसः सपत्रनिचयः शाखाप्रशाखांचितः, पीनस्कंधविराजितः प्रतिपदं संतापहारी सताम् ।
चिंतागोचरवारिशुद्धविसरं दातुं समर्थोऽर्थिनां, तत्राजायत कल्पपादपसमः श्री**जावडः** श्रावकः ॥ २ ॥
तस्याभवन्निखिलकल्मषदोषहीना-स्तिस्रः प्रियास्त्रिपथगा इव पूरिताशाः ।
लोकत्रयप्रथितशीलयुतास्तथापि, प्राप्ताः कदाचन न दीनपथातिथित्वम् ॥ ३ ॥
**जिनदेवी** बभूवासामाद्या मधुरवादिनी । स्त्रैणोचितगुणोपेता जिनेंद्रपदपूजिका ॥ ४ ॥
राकासुधारश्मिसमानशीला शुद्धाशयानंदितदीनलोका । रूपश्रिया तर्जितकामकांता कांता द्वितीयाऽजनि **सर्वदेवी** ॥५॥
कुंदावदातद्युतिशीलशालिनी मातेव सर्वस्य जनस्य वत्सला ।
**पूर्णी** तथा पूर्णमनोरथस्थितिर्जाता तृतीया गृहिणी विवेकिनी ॥ ६ ॥
यः सर्वदा सर्वजनोपकारी गंभीरधीरो जिनधर्मधारी । तं **दुर्लभं** दुर्लभमल्पपुण्यैः प्रासूत तत्र प्रथमा तनूजम् ॥ ७ ॥
संजातौ भुवि विख्यातौ **सर्वदेव्याः** सुतावुभौ । उदयाचलचूलायाः सूर्याचंद्रमसाविव ॥ ८ ॥
आद्यस्तयोः सज्जनचित्तहारी नयी विनीतः सकलोपकारी । जिनेंद्रपूजाविहितानुरागः साधुप्रियोऽजायत **देवनागः** ॥९॥
द्वितीयश्च गुणावासः सत्यशौचसमन्वितः । कलावा**नुज्ज्वलो** जातः कुलकैरवचंद्रमाः ॥ १० ॥
सूरेः श्री**जिनवल्लभ**स्य गणिनः पादप्रसादेन त-ल्लब्धं येन विवेकयानमसमं दुःप्रापमल्पाशयैः ।
येनाद्यापि सुखं सुखेन कृतिनः संसारवारांनिधेः, पारं यांति परं निरस्तसकलक्लेशावकाशोदयाः ॥ ११ ॥
शिरसि नमनं यः साधूनां दृशोरतिशांतता, वदनकमले सत्या वाणी श्रुतौ श्रवणं श्रुतेः ।
मनसि विमलं बोधं पाणौ धनस्य विसर्जनं, जिनगृहगतिः पादांभोजे चकार विभूषणम् ॥ १२ ॥
प्रालेयशैलशिखरोज्ज्वलकांतिकांत-श्रीनेमिनाथभवनच्छलतश्च येन ।
मूर्त्तिः स्वधर्म इव सर्वजनीयदातु-राविष्कृतः सकललोकहितावहेन ॥ १३ ॥

---

* ताडपत्रीयमिदं पुस्तकं पत्तने संघसत्कभाण्डागारे विद्यते । द्रष्टव्यम्-पिटर्सन् रीपोर्ट पुस्तक ५, पृ० ७४ ।

चारित्राचरणैकधीरमनसो गीतार्थचूडामणेः, विद्यानां मणिदर्पणस्य शमिनः सेव्यस्य पुण्यार्थिभिः ।
यश्च श्री**मुनिचंद्रसूरि**सुगुरोः पादांबुजं सेवितुं, वाञ्छन्मत्सरवर्जितः सुरवधूप्राणेश्वरत्वं गतः ॥ १४ ॥
निःसीमधर्म्मनिलयं कलितं सदर्थैः, सद्वृत्तताविरहितं न कदाचनापि ।
ख्यातं जगत्त्रयमिवापदनंतसत्त्वं, **पूर्णा**सुतत्रयमतीव गभीरमध्यम् ॥ १५ ॥
लक्ष्मीविलासकलितो बलिदर्प्पहंता, सत्यानुरागिहृदयो विधिपक्षपाती ।
**लक्ष्मीधरः** सुतवरोऽजनि तत्र मुख्य-श्चित्रं तथापि न जनार्दनतामुपेतः ॥ १६ ॥
आराधितश्रीजिननेमिनाथः, संपादितानंतखलप्रमाथः ।
आसीद् द्वितीयो **धनदेव**संज्ञः, सदा सदाचारविचारविज्ञः ॥ १७ ॥
यस्यासमानफलकांतगुणाभिरामं, संरुद्धरंध्रमविलाभिजलप्रवेशम् ।
सद्वीवरैरनुगतं मतियानपात्रं, गंभीरकार्यजलधेः परभागमेति ॥ १८ ॥
विवेकजनवल्लभः स्फटिकशैलशुद्धाशयः, कलंकविकलः सदा सकललोकसंतोषदः ।
बभूव जिनपूजकः सुगुरुवंदकः श्रावक-स्तृतीय इह नंदनः सुजननंदनः **श्रीधरः** ॥ १९ ॥
तत्रो**ज्झिल**स्य समजायत धर्म्मपत्नी, मंदाकिनीसलिलनिर्मलशीलयुक्ता ।
**लक्ष्मीः** समस्तजनवाञ्छितदानदक्षा, चित्रं न निर्गुणरता न चलस्वभावा ॥ २० ॥
उल्लासकाः सुमनसां विदितानुभाव-संपादकाः समयिनां बहुलं फलानाम् ।
नित्यं निजक्रमयुता भुवनप्रसिद्धाः, पुत्रास्त्रयो ऋतुसमाः षडिहोपजाताः ॥ २१ ॥
कारुण्यरत्नांकुरमेरुशैलः सौजन्यपीयूषरसांबुराशिः । आद्यः सुतोऽजायत **वर्द्धमान**स्तेषां कलाभिः परिवर्द्धमानः ॥ २२ ॥
अपारगांभीर्यनिवासभूमिर्विद्वत्सु श्राद्धादिजनोपकारी । अनल्पलावण्ययुतो द्वितीयः पुत्रः पवित्रोऽजनि **मूलदेवः** ॥२३॥
कीर्तेः पात्रं निजगुरुगिरां पालने लब्धलक्षः, स्थानं नीतेर्जनकनयनानंददायी सदैव ।
दूरीभूताखिलख······लो जातवान्पुत्ररत्नं, तार्त्तीयीकः कुशलवसुतावल्लभो **रामदेवः** ॥ २४ ॥
बभूव कारुण्यपरिग्रहाय कृतागृहः कुग्रहदर्प्पहंता । विपत्तिसंपत्तिसमानुरागी **यशोधरो** धीरिमधाम तुर्यः ॥ २५ ॥
जिनेंद्रपूजारचनानुबंधबद्धोद्यमो निर्मलकीर्त्तिशेषः । भक्त्या समासेवितसर्व्वदेवस्ततोऽनुजोऽजायत **सर्व्वदेवः** ॥२६॥
मुक्ताफलारंभरतिर्न दीनो विश्रामभूमिः पुरुषोत्तमानाम् । पयोधिवन्नित्यगभीरभावः षष्ठस्तनूजोऽजनि **चापदेवः** ॥२६॥
तत्रासीद् **रामदेव**स्य वल्लभा शीलशालिनी । **आसदेवी**ति विख्याता सुरूपा रूपिकापरा ॥ २८ ॥
**यशोधर**स्य जाया च **थेहिका** हितकारिणी । **शोभना सर्वदेव**स्य **चापदेव**स्य **शांतिका** ॥ २९ ॥
अस्ति स **थेहड** इति प्रथिताभिधानः, कुंदावदातहृदयः सदयः सदैव ।
वीरो **यशोधर**सुतः कलितः कलाभि-र्नित्यप्रशस्तचरितः प्रणतो गुरूणाम् ॥ ३० ॥
आनंदकः सुमनसां सततं सुधर्म्म-बद्धादरः कृतविमानमनःप्रवृत्तिः ।
आस्ते महेन्द्र इव वल्लभचित्रलेखः श्री**रामदेव**तनयो विनयी **महेंद्रः** ॥ ३१ ॥
**हरिचंद्रा**भिधानश्च द्वितीयोऽभूत्तनूद्भवः । वल्लभः सर्वलोकानां प्रतिपच्चंद्रमा इव ॥ ३२ ॥
विनयी नयसंवासो **चापदेव**स्य नंदनः । **गोसल**ाख्यः सुशीलोऽभूद्गुणरत्नमहानिधिः ॥ ३३ ॥
आसीदाद्या **महेंद्र**स्य महाश्रीरूपसप्रिया । **राज्यश्रीः** शीलकारुण्यदानौचित्यादिशालिनी ॥ ३४ ॥
**राज्यश्रि**यस्त्रयः पुत्रा **वीसल**ोऽथ **यशोभटः** । **बोहित्थ**श्चेति संजाता गुणरत्नौघरोहणाः ॥ ३५ ॥
**राज्यश्री**रन्यदा तत्र शुद्धश्रद्धानबंधुरा । इत्येवं चिंतयामास निस्समानगुणोज्ज्वला ॥ ३६ ॥

प्राणा वायुमयाः स्वभावतरला लक्ष्मीः कटाक्षस्थिरा, स्वाम्यं बालविलंबितातनुशिलावस्थानदुःस्थं सदा ।
वातांदोलितदीपकुड्मलदलप्रायः प्रियैः संगम-स्तन्नास्तीह किमप्युदारमनसामाशामिवेशास्पदम् ॥ ३७ ॥
तल्लब्ध्वा मनुजेषु जन्म विमलं संप्राप्य देशादिकं, श्रुत्वा श्रीजिनचंद्रवाचमुचितां श्रीमद्गुरूणां पुरः ।
स्वाधीने च धने च संगतवति स्वीये कुटुंबे सतां, युक्तो धर्म्मविधान एव सततं कर्तुं महानुद्यमः ॥ ३८ ॥
सम्यग्ज्ञानपुरःसरश्च महतां धर्म्मादरः संमतः, प्रायस्तच्च जिनागमादविकलं संजायते धीमताम् ।
सर्वं लोकमवेक्ष्य शांतविशदप्रज्ञाप्रकर्षोद्यमं, काले सोऽपि कलौ न्यवेशि मुनिभिः संघोत्तमैः पुस्तके ॥ ३९ ॥
चारित्रभारचरणासहमानसेन पंचप्रकारविषयामिषलालसेन ।
पात्रादिदानमयधर्म्मवता तदेयं लेख्यं परिग्रहवता गृहिणा तदेव ॥ ४० ॥
एवं विचिंत्य सुचिरं श्रेयोर्थं स्वस्य सा च **राज्यश्रीः** । श्री**शांतिनाथचरित**स्य पुस्तकं लेखयामास ॥ ४१ ॥
विरचितविचित्ररेखं सुवर्णपत्रावलीकलितशोभम् । यद्भाति करे विदुषां कंकणमिव कीलिकारम्यम् ॥ ४२ ॥
राकाशीतांशुशुभ्रः स्फुरदमलदशः सर्ववस्तुप्रकाशी, सम्यग्ज्ञानप्रदीपस्त्रिभुवनभवनाभ्यंतरे भासमानः ।
यावन्मोहांधकारं शमयति सकलं पूरिताशेषदोषं, तावन्नंद्यान्मुनींद्रैरयमिह सततं पुस्तकः पठ्यमानः ॥ ४३ ॥

# [ ५२ ]

## धर्कटवंशीय-श्रेष्ठिनागेन्द्र-लेखित-[ सिद्धर्षिकृत ] उपमितिभवप्रपंचाकथा-पुस्तकप्रशस्तिः ।*

**[ लेखनसमयो न निर्दिष्टः, परं वर्णनानुसारेण १२-१३ शताब्दी संभाव्यते ]**

**श्रीमाला**चलमौलिमूलमिलितस्त्रैलोक्यसुश्लाघितः, पर्वालीकलितः सुवर्णनिलयः प्रासादलब्धालयः ।
लीना···भ्यकुलः प्रलीनकलुषः शुभ्रातपत्रानुगो, वंशोऽस्ति प्रकटः सदौषधनिधिः **श्रीधर्कटानां** पटुः ॥ १ ॥
सारासारविचारचारुचतुरः सारार्थबद्धादरः, संसारोदरवर्त्तिजंतुशरणश्रीमज्जिनार्चापरः ।
कारुण्याकरसद्गुरुस्तुतिवशप्राप्तार्थदानोद्यत-स्तत्रात्मीयकुलक्रमोचितरतः स**न्नेमिचंद्रो**ऽभवत् ॥ २ ॥
तस्यानघा घनपयोधरयुग्मरम्या, रामानुरूपगुणरंजितभर्तृचित्ता ।
चिंताव्यतीतफलदायकधर्मलीना, **निर्वाण**नामविदिता जनतासु पत्नी ॥ ३ ॥
जीवाजीवपदार्थसार्थवचनः संपूर्णचंद्राननः, सर्वाधीनधनः सलीलगमनः क्रोधेभपंचाननः ।
नैपुण्यार्जितसज्जनः प्रतिदिनप्रारब्धदानावनः, सूनुः श्लाघित**सर्वदेव**भुवनख्याताभिधानस्तयोः ॥ ४ ॥
देवेन केनापि कदाचिदेष, नीतो रजन्यां स्वगृहात्प्रसुप्तः ।
**अष्टापदे** वंदितवान् जिनेंद्रान्, प्रातः स्वहस्ते कुसुमं ददर्श ॥ ५ ॥
सदा दानाशक्ता स्वकुलविमलाचारनिरता, सुशीलप्रख्याता परहितरता दैन्यरहिता ।
अमानातिक्रांता गुणगणयुता सज्जनमता, सद**च्छुप्ता**नामा वरसहचरी तस्य च तयोः ॥ ६ ॥
**लक्ष्मी**पतिः सुतनयोऽजनि **यक्षदेवः**, श्री**राजिनी**नयनसंमद **आम्रदेवः** ।
**धीधी**मनोभवनदीपक**चांदिगा**ख्य-स्तुर्यो **यशोमति**वधूप्रियपुंडरीकः ॥ ७ ॥

---

* एतत्प्रशस्तियुक्तं ताडपत्रीयपुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरभाण्डागारे विद्यते । द्रष्टव्यम्-पिटर्सन् रीपोर्ट पुस्तक ३, पृ० १४९-५३ ।

चतुर्भिरेभिर्जिनधर्मलीनैर्विभावितागाधभवाद्विभावैः । व्यधायि **घंघाणक**संनिवेशे शरण्यचंद्रप्रभदेवहर्म्यं ॥ ८ ॥
प्रत्याख्यानं येन कृत्वौदनादेः पश्च्यां निर्गत्योज्जयंते नगेंद्रे ।
श्रीमन्नेमिर्वंदितः पूजितश्च क्षिप्रं भूयाद्**यक्षदेवः** ससौख्यं ॥ ९ ॥
**यक्षदेव**स्य तस्याद्यमी (?) जातवान् चारुपुत्रः प्रियः **शांत**नामादिमः ।
धर्मकर्मा सुशील**आम्रदत्ता**भिधः क्रोधकोपोजितः कमरुः पोजितः (?) ॥ १० ॥
धर्मार्थादिचतुःप्रकारपुरुषस्वार्थोद्यतस्यान्यदा, द्वौ द्वौ सुंदरभार्ययोर्वरसुतौ श्राद्धा**आम्रदेव**स्य तौ ।
संजातौ कुलजप्रियौ सुसरलौ **पार्श्वाख्य-मूणाग**कौ, **राजिन्या** बुध**लक्ष्मणो** गुणनिधि**र्नागेंद्र**नामानघः ॥११॥
**सन्नेमिचंद्र**-गुणमंदिर-**देवचंद्र**सूनुद्वयं व्यजनि **चांदिग**नामधेयात् ।
**प्रद्युम्न-शांब**कृतनामकमुज्वलांगं सत्**पुंडरीक**सुतयाजनि पुत्रयुग्मं ॥ १२ ॥
**नागेंद्रः** शुभधर्मकर्मनिरतः सन्**मोहिनी**भार्यया, **पद्मावत्य**भिधानया सरलया स्वस्त्रीयया संयुतः ।
**वाहिन्या** सुतया सुतेन गुणिना सु**श्रीकुमारेण** वै, **शांता**पत्ययशःप्रियानघ**यशोदेवेन** धर्मार्थिना ॥ १३ ॥
अथान्यदा दानतपोविधानसुभावनाशीलसनाथधर्मे । जिनप्रणीते विदधन् प्रयत्नं शृणोति धर्म्यं वचनं गुरुभ्यः ॥ १४ ॥
तद्यथा — निरवधिभववार्द्धौ कर्मदोषाद्भ्रमंतः, प्रवरशरणहीना योनिलक्षेषु जीवाः ।
कथमपि त्रुटि (?) योगान्मानुषं जन्मरत्नं, सकलगुणविशिष्टं कष्टलक्षैर्लभंते ॥ १५ ॥
प्राप्य तत्प्राणिभिः प्रार्थितार्थपदं प्रेरणाप्रोद्यतप्रांजलप्रेरितैः ।
प्रत्यहश्चिंतयित्वा धनाद्यस्थिरं कर्तुमेवोचितं चारु जैनं वचः ॥ १६ ॥
प्राणातिपातविरतिप्रमुखानि यानि, जैनागमे निगदितानि महाव्रतानि ।
तानि क्षमो यदि न कर्त्तुमशक्तियोगाद्यूयं कुरुध्वममलं गृहिधर्ममेनं ॥ १७ ॥
कर्त्तव्यं जिनपुंगवस्य महनं स्तोत्रैश्च तत्संस्तवः, सेव्यः साधुजनः प्रसन्नवदनैः श्रव्यं जिनेंद्रोदितं ।
चिंत्या द्वादशभावना निजहिते कार्यः प्रयत्नो महान्, शक्त्या चान्यहिते भवाब्धितरणप्रत्युद्यतैः प्राणिभिः ॥१८॥
मोहादिद्विपकुंभभेदनविधौ येषां सदा पौरुषं, कामित्वं कमनीयमुक्तिललनापीनस्तनस्पर्शने ।
न्यायोपात्तधनं गतं जिनमतक्षेत्रेषु सप्तस्वहो, तेषां पौरुषकामिता विभविता मन्ये कृतार्था भुवि ॥ १९ ॥
रम्ये श्रीजिनपुंगवस्य सदने बिंबे तदीयेऽनघे, संघे श्लाघ्यतमे प्रशस्तचरिते पूज्ये चतुर्वर्णके ।
सर्वज्ञागमलेखने विनिहितं वित्तं भवेदिष्टदं, सत्क्षेत्रे विधिनोप्तमिष्टसमये शाल्यादिबीजं यथा ॥ २० ॥
ये कृत्वा जिनमंदिराणि विधिना संपूज्य वस्त्रादिभिः, श्रीसंघं समुपात्तनीतिविभवाः श्रद्धापराः श्रावकाः ।
स्याद्वादप्रतिबद्धवाक्यजनकश्रीवीतरागेण य-न्निर्गीतं किल लेखयंति भविनः किं किं न तैः सत्कृतं ॥ २१ ॥
श्रुत्वा पुस्तकवाचनामनुदिनं गृह्णंति केचिद्व्रतं, देवाधीशजिनेंद्रपूजनपराः श्राद्धा भवेयुः परे ।
अन्ये भद्रकभावभावितमनाः सद्धर्मयोग्या नरा, जायंते खलु यस्य पुस्तकमिदं हेतुः स तच्छ्रेयसः ॥ २२ ॥
इत्याकर्ण्य जिनप्रणीतमनघं धर्मं गुरुभ्यस्ततः, पर्यालोच्य कुटुंबकेन गुणिना **नागेंद्र**नामा गृही ।
**सिद्धाख्येन** कृतां कथा**मुपमितिं** सिद्धांतसारोद्धृतां, तोषादेष सुधीर्व्यलीलिखदिमां स्वश्रेयसे पुस्तके ॥२३॥
यावन्मेरुः प्रतपति रविर्द्योतते यावदिंदु-र्यावद्वायुः स्फुरति गगने तारकाः संति यावत् ।
यावद्भूमिः प्रवहति पयः सागरे यावदेत-चावन्नंद्याद्गुणिभिरनिशं पुस्तकं वाच्यमानं ॥ २४ ॥

॥ मंगलं महाश्रीः ॥

## [ ५३ ]

## गूर्जरश्रीमालवंशीय-कोशाधिपदेवप्रसादसन्तति-लेखित [ हेमचन्द्रीय ] नेमिचरित्रपुस्तकप्रशस्तिः* ।

[ लेखनसमयो नोपलब्धः, परं वर्णनानुसारतः १३ शताब्दीपूर्वभागो ज्ञायते ]

सद्वृत्तादिगुणौघरत्नरुचिरः शाखाशतैर्विस्तृतो, नव्योन्मीलदखर्वपर्वकलितश्छायास्पदं भूभृतां ।
उच्चैर्वंश इवास्ति **गूर्जरवरः श्रीमाल**वंशः क्षितौ, सद्धर्मा (?) परमेष संततिफलैर्विश्वोपकारोद्यतः ॥ १ ॥
एतस्मिन् गुणरत्नरोहणगिरि**र्देवप्रसादा**भिधः, स्तुत्यानेकगुणौघरत्ननिधिभिः कोशाधिपो नूतनः ।
जातो यस्य विवेककल्पविटपी चिन्तालवालान्तरे, विश्वप्राणिगणोपकारकरणप्रावीण्यमुद्राफलः ॥ २ ॥
नाम्ना **महणलदेवी**ति प्रिया तस्य प्रियंवदा । शुद्धशीला तयोः पुत्री जज्ञे पुत्रद्वयं ततः ॥ ३ ॥
सुता **माल्हणदेवा**ख्या ठक्कुर**चाहड**प्रिया । विश्रान्तः संततिर्यस्याः श्रेयोभिः कीर्तिभाजनम् ॥ ४ ॥
देवं स्वीयगुरुं मनोज्ञवचनैर्यः स्तौति न स्वं पुनः, सर्वस्योपकृतिं तनोति नितरां न स्वस्य कस्मादपि ।
संसर्गं गुणिनां सदैव कुरुते न क्वापि पापीयसां, स श्लाघ्यो **बहुदेव** इत्यभिधया पूर्वस्तयोरंगजः ॥ ६ ॥
तत्पत्नी जिनराजचारुचरणाम्भोजद्वयीभृङ्गिका, श्रीमत्पंचनमस्कृतिस्मृतिपरप्रावीण्यपुण्योन्नतिः ।
शीलाचारविचारसारयुक्ता हारावलीभूषिता, ख्याता श्री**जगदेव**मन्त्रिदुहिता **शृङ्गारदेवी** भुवि ॥ ६ ॥
युक्तायुक्तविचारनिस्तुषमति**र्बालप्रसादः** पर-स्तस्याभूत् **सुभगा** कलत्रमभवत्तज्जन्मसूनुद्वयं ।
आद्योऽस्तीह विशुद्धबुद्धिकलितः सुनु**र्नृसिंहा**भिधः, सौभ्रात्रप्रथितोरुवृत्तकलितोऽन्यो **रत्नसिंहा**भिधः ॥ ७ ॥
सुतत्रयं सुता चैका **बहुदेव**स्यापि संततिः । बालभावेऽपि यश्चित्रं प्रवालचरितोत्तमं ॥ ८ ॥
भक्तिर्व्यक्तिरभिज्ञविस्मयकरी पित्रोस्तथा बन्धुषु, शान्तिः शैशवसङ्गमेऽपि सुधियां केषां न दत्ते मुदं ।
औचित्यं च पुराणपूरुषजनासाध्यं च यस्योच्चकैः, सत्पुत्रः प्रथमो विवेकवसतिः श्लाघास्पदं **छड्डकः** ॥ ९ ॥
सुधामूर्त्तिरिवान्यश्चाह्लादको **वद्दका**भिधः । शूरः प्रतापमार्त्तण्डस्तृतीयः **पेथडः** पुनः ॥ १० ॥
नाम्ना **नायकदेवी**ति सुतारत्नं सुताऽभवत् । तपस्तेजोद्भुतं यस्या नादपीयूषसंभृतं ॥ ११ ॥
नाम्ना **कपूरदेवी**ति **छड्डक**स्य प्रियाभवत् । **सङ्ग्रामसिंह**स्तत्पुत्रो **हंसका**दिसुताद्वयं ॥ १२ ॥
नाम्ना **सुदसलदेवी** गेहिनी **वद्दक**स्य च । धर्मरङ्गो यया चक्रे न प्रमादे निजं मनः ॥ १३ ॥

× × [ अपूर्णा ] × ×

## [ ५४ ]

## प्राग्वाटवंशीय-नारायणश्रेष्ठि-लेखित-[ नेमिचन्द्रसूरिकृत- ] उत्तराध्ययनसूत्र-वृत्ति-पुस्तकप्रशस्तिः† ।

[ लेखनकालः प्रायः १३ शताब्दीप्रान्तभागः ]

**प्राग्वाटवंशे**ऽजनि **मोहणा**ख्यः श्रेष्ठी प्रिया तस्य **सुहागदेवी** ।
तयोः सुतो **नागड**नामकोऽभूत्तस्यापि भार्या **सलषू** प्रसिद्धा ॥ १ ॥

---

* एतत्प्रशस्तियुक्तं ताडपत्रात्मकं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यते । अन्तिमपत्रस्य विनष्टत्वात्, अपूर्णा एवेयं प्रशस्तिरुपलभ्यते ।

† ताडपत्रात्मकं पुस्तकमिदं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यते । डा० नं० १६ । द्रष्टव्यम्-पिटर्सन् रीपोर्ट पुस्तक ३, पृ० ७१ ।

तयोस्तु **नारायण**नामधेयः पुत्रोऽभवत्स्फूर्जितभागधेयः । चित्रं गुरुत्यागकृतादरोऽपि यः सर्वदा धार्मिकलोकधुर्यः ॥२॥
तस्याभूत्**कडुया**भिख्योऽनुजो **धरणिग**स्तथा । तयोः प्रियतमा **लाषू जासले**ति यथाक्रमं ॥ ३ ॥
**नारायण**स्य संजज्ञे **हंसले**ति सधर्मिणी । **रत्नपालो**ऽभिधानेन पुत्रोऽभूत् हृदयप्रियः ॥ ४ ॥
जैनधर्मधुराधुर्यः श्रेष्ठी **नारायणो**ऽन्यदा । श्रीम**देवेंद्रसूरी**णामिति वाक्यामृतं पपौ ॥ ५ ॥
तथा हि–विषयसुखपिपासोर्गेहिनः क्वास्ति शीलं करणवशगतस्य स्यात्तपो वापि कीदृक् ।
अनवरतमदभ्रारंभिणो भावनाः कास्तदिह नियतमेकं दानमेवास्य धर्मः ॥ ६ ॥
तच्च द्विधा सर्वविदो वदंति ज्ञानाभयोपग्रहदानभेदात् । तत्रापि विश्वैकविकासनेन सद्ज्ञानदानं प्रवरं वदंति ॥ ७ ॥
कालादिदोषान्मतिमांद्यतश्च तच्चाधुना पुस्तकमंतरेण । न शक्यते कर्तुमतोऽत्र युक्तं भव्यस्य सत्पुस्तकलेखनं हि ॥ ८ ॥
एवं निशम्य सम्यक् श्रेष्ठी **नारायणो** विमलबुद्धिः । इदममल**मुत्तराध्ययनपुस्तकं** लेखयामास ॥ ९ ॥
यावद् व्योमसरोवरे…………( इति पद्यम् )………………………… ॥ छ ॥ छ ॥

## [ ५५ ]

### पल्लीपालवंशीय-सांतूश्राविकालेखित-आचारसूत्र-पुस्तकप्रशस्तिः* ।

[ लेखनकालो अनुल्लिखितः, अनुमानात् प्रायस्त्रयोदशशताब्दी संभाव्यते ]

उत्तुङ्गः सरलः सुवर्णरुचिरः शाखाविशालच्छविः, सच्छायो गुरुशैललब्धनिलयः पूर्वश्रियाऽलंकृतः ।
सद्वृत्तत्वयुतः सुपत्रगरिमा मुक्ताभिरामः शुचिः, **पल्लीपाल** इति प्रसिद्धिमगमद् वंशः सुवंशोपमः ॥ १ ॥
निश्वासः परिपूर्णवृत्तमहिमा मुक्तामणिप्रोज्ज्वल-स्तत्राभूद् विमलोल्लसद्वसुरसौ **श्रीचंद्र**नामा गृही ।
श्रीमत्**पार्श्वजिनेश्वरस्य** सदनव्याजेन येनाहितो, मेदिन्यां स्वयशःप्रकाशधवलः स्फुर्यत्तिरीटः स्फुटं ॥ २ ॥
तस्यासीद् गृहमेधिनी जिनवचःपीयूषपूर्णश्रुतिर्- **माइं** इत्यभिधा बुधैर्मुररिपोर्लक्ष्मीरिव प्रोच्यते ।
सा प्राचीव विवेकि**साभड**-सुधी**सामंत**संज्ञौ सुतौ, सूर्याचंद्रमसाविव स्फुटकरौ धत्ते स शुभ्राशयौ ॥ ३ ॥
आसीत्तद्भगिनी स्ववंशनभसः सच्चंद्रिका निर्मला, नाम्ना **श्रीमति**राश्रितागममतिः सद्दर्शनालंकृतिः ।
श्रुत्वा जैनवचो विवेच्य विविधां संसारनिःसारतां, सद्यः **श्रीजयसिंहसूरि**सविधे दीक्षामसावग्रहीत् ॥ ४ ॥
तस्या एव भगिन्या **सांतू**नाम्न्या विशालमभिलेख्य । **आचारसूत्र**पुस्तकमिह दत्तं **श्रीमति**गणिन्यै ॥ ५ ॥
इन्दुर्यावदमन्दमन्दरगिरिर्यावत्सुराणां सरित्, यावद् यावदिलातलं जलनिधिर्यावन्नभोमण्डलम् ।
यावत् सान्द्रमनिन्द्यनन्दनवनं यावद् यशांस्यर्हतां, यावत्तावदिह प्रबोधतरणिर्नन्द्यादसौ पुस्तिका ॥ ६ ॥
एतत्पुस्तकममलं सकलं श्री**धर्मघोष**सूरीणाम् । व्याख्याहेतोरर्पितमिह सद्यः **श्रीमति**गणिन्या ॥ ७ ॥

## [ ५६ ]

### प्राग्वाटवंशीय-श्रे० देदाक-गृहीत-उत्तराध्ययनवृत्ति-पुस्तकप्रशस्तिः† ।

[ लेखनकालो नोल्लिखितः, परं वर्णनानुसारेण १४ शताब्दी ज्ञायते ]

स श्रीवीरजिनो जीयाद्यस्य पादनखांशवः । विकाशे भव्यराजीवराजेस्तरुणभानवः ॥ १ ॥
श्रुत्वावटावाप्तिमुख्यमुच्चैर्हिंसाफलं यत्र दयाप्रधानाः । धर्मेषु कृत्येषु जना यतंते पुरं तदत्रास्ति **दयावटा**ख्यं ॥ २ ॥

* एतत्प्रशस्तियुक्तं ताडपत्रात्मकं **सनिर्युक्तिकमाचाराङ्गपुस्तकं** पत्तने संघवीपाडागतभाण्डागारे विद्यमानमस्ति । इयं प्रशस्तिः पुनर्निर्युक्तिग्रन्थप्रान्तेऽपि लिखिता विद्यते ।

† ताडपत्रात्मकमिदं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यमानमस्ति ।

तत्राभवत्**कुमरसिंह** इति प्रसिद्धः श्रेष्ठी जिनेशपदपङ्कजबद्धरागः ।
सम्यक् त्रिवर्गनिरतोऽपि सुधर्मकामा **प्राग्वाटवंश**तिलकः सदनं गुणानाम् ॥ ३ ॥
नाम्ना **कुमरदेवी**ति तस्य जज्ञे सधर्मिणी । शीलादिभिर्गुणैः शुभ्रैः सुलसामनुकारिणी ॥ ४ ॥
तयोस्तनूजाः क्रमशो बभूवुः पञ्चाप्रपञ्चा चरणेन वित्ताः । तत्रापि धुर्यो नयमार्गनिष्ठो **देदाक**नामा सुगुणैर्गरिष्ठः ॥ ५ ॥
द्वितीयः **किसा**नामांकस्तृतीयः **सांगणा**भिधः । **धनपाल**श्चतुर्थस्तु पञ्चमो **भधडा**भिधः ॥ ६ ॥
आद्यस्य शीलपात्रं **वीशलदेवी** बभूव कलत्रं (?) । देवगु·····················देवी द्वितीयस्य ॥ ७ ॥
**शृंगारदे**व्यभिधया शुचिशीला **सांगण**स्य जायाऽभूत् । **धनपाल**स्य तु दयिता **सलषणदेवी**ति सुयथार्था ॥८॥
**आल्हणदेवी**संज्ञा जज्ञे जाया पुनः कनिष्ठस्य । **देदाक**स्य तनुसुवोऽ**जयसिंह**प्रभृतयोऽभूवन् ॥ ९ ॥
धर्मकर्मरते नित्यं गुरुलज्जाविभूषणे । **देदा**दीनां स्वसारो··································॥ १० ॥
·········दीक्षां प्रपद्य जनके सुरालये प्राप्ते । **देदाकः** सकुटुंबः शुश्रावैवं सुगुरुवाक्यं ॥ ११ ॥
विषयसुखपिपासोर्गेहिनः क्वास्ति शीलं, करणवशगतस्य स्वात्तपो वापि कीदृक् ।
अनवरतमदभ्रारम्भिणो भावनाः का-स्तदिह नियतमेकं दानमेवास्य धर्मः ॥ १२ ॥
धर्मः स्फूर्जति दानमेव गृहिणां ज्ञानाभयोपग्रहैः-स्त्रेधा तद्वरमाद्यमत्र यदितो निःशेषदानोदयः ।
ज्ञानं चाद्य न पुस्तकैर्विरहितं दातुं च लातुं च वा, शक्यं पुस्तकलेखनेन कृतिभिः कार्यस्तदर्थोऽर्थवान् ॥ १३ ॥
इति **देदाकः** श्रेष्ठी श्रुत्वा स्वकुटुंबसंयुतो मुदितः । समगृह्णीत सुवृत्तिं सदुत्तराध्ययनसूत्रस्य ॥ १४ ॥

# [ ५७ ]

## श्रीमालज्ञातीय-श्रेष्ठिसरवणसुत·······लेखित-ज्ञाताधर्मकथावृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकालनिर्देशो नोपलब्धः, परं वर्णनानुसारतः संवत् १४५०-७५ मध्ये ज्ञायते । ]

अखंडैर्यः खंडैर्नवमिरभितः पिंडितवपुः-सुधाकुंडैः कुंभीनससहस्रकृतैर्मंडित इव ।
सुरैः सेव्यः सर्वैरविजितजरामृत्युचकितैः, प्रभुः स श्रीपार्श्वो जयति नितमां यत्र सततम् ॥ १ ॥
उद्दामम्लेच्छकोटिप्रसमरसमरत्रस्तवृंदारकाणां, विश्रामस्थानतां यत् प्रतिपदमगमत् पुण्यलोकैरशोकैः ।
चंचद्गंगातरंगोज्ज्वलबहलगुणैर्धाम धर्मश्रियां यत्, श्रीमद् **घोघा**भिधानं सुललितनगरं स्वस्तिमन्नित्यमस्ति ॥२॥
तस्मिन् रमायाः सदने दवीयो देशस्थवस्तुप्रभुभिः प्रपूर्णे ।
वेलाकुले भूमितले प्रसिद्धे **घोघा**भिधाने नगरे समृद्धे ॥ ३ ॥—त्रिभिर्विशेषकम् ।
वेधा वीक्ष्य कलिप्रचंडभुजगग्रस्तं समस्तं जगत्, तत्राणाय ससर्ज तर्जनपरां यां दुर्जनानां ततः ।
ज्ञातिं पूर्णमृगांककांतिविशदां **श्रीमाल**संज्ञामिह, शश्वद्धामविवेकवासभवनं विज्ञानवारांनिधिम् ॥ ४ ॥
तस्यां ज्ञातौ बृहत्यामतिमतिविभवापास्तवाचस्पतिः श्री-क्रीडागारं गरीयो नरवरनिवहैर्माननीयः सदापि ।
मंत्री मंत्रप्रबलसुबलवान् धुर्यधैर्यादिवर्यः, **सांडा**ह्वानः समजनि जनतासेवनीयोऽवनौ वै ॥ ५ ॥
**श्रियादेवी**ति तस्यासीद् भार्या भूरिगुणैकभूः । याऽमानदानशीलादिपुण्यैर्जज्ञे प्रसिद्धिभाक् ॥ ६ ॥
तयोः सुतावजायेतां विख्यातौ क्षोणिमंडले । **सरवण-धांधा**ह्वानौ प्रधानौ व्यवहारिषु ॥ ७ ॥

* ताडपत्रात्मकं पुस्तकमिदं पत्तने संघवीपाडासत्कभाण्डागारे विद्यते ।

आद्यः **सरवण**नामतः सुविदितो देवालयैः सुंदरां, सत्साधर्मिकलोकलक्षबहुलां गुर्वादिभिर्भासुराम् । **श्रीशत्रुंजय-रैवता**दिषु महातीर्थेषु यात्रां सृजन्, श्रीसंघाधिपतेः पदं निजकुले विस्तारयामासिवान् ॥ ८ ॥

**पादलिप्तपुरे**ऽपूर्वललताह्वसरोवरे । उद्धारं यच्चकारोरुद्रविणव्ययपूर्वकः ॥ ९ ॥

**संसारदेवी** भुवि................ । .........लादिवरेण्यपुण्यैः फलेग्रही स्वीयजनुः ससर्ज ॥ १० ॥

द्वितीयोऽप्यद्वैतभाग्याभिरामः श्रीमान् धीमान् **धांधनामा**ऽजनिष्ट ।
यो दुष्काले भूरिलोकानशोकान् सत्रागारे भोजयित्वा वितेने ॥ ११ ॥

**पादलिप्तपुरे** पार्श्वप्रासादं यः समुद्दध्रौ । अन्यान्यपि बहून्येष धर्मस्थानानि चाकरोत् ॥ १२ ॥

**सरवण**संघाधिपतेस्तनयो विनयोज्ज्वलो गुणविशालः । ........................ ॥

[ इत आरभ्य १८ अङ्कपर्यन्तानि पद्यानि प्रमृष्टानि ताडपत्रादर्शे । ]

श्री**देवसुंदरा**चार्यसंतानजमुनीश्वरैः । वाच्यमानः सदा जीयात् पुस्तकस्त्रस्तकल्मषः ॥ १९ ॥

# [ ५८ ]

## श्रीमालवंशीय-वैरसिंहलेखित-समरादित्यचरित-पुस्तकप्रशस्तिः* ।

[ प्रशस्तेरपूर्णत्वात् लेखनकालो नोपलब्धः । ]

–इति **समरादित्यचरितं** समाप्तम् ॥

परस्परपरिस्यूतनयगोचरचारिणी । अनेकान्तामृतं दुग्धे यद्गवी तं जिनं स्तुमः ॥ १ ॥

अप्राप्तोऽपि हि खंडनां गुणवते धर्माय हिंस्रो न वा, छायाभिः प्रणिहंति तापमभितो मुक्तः सदा पल्लवैः । निश्छिद्रोऽपि करोति यः श्रुतिसुखं वंशः क्षमाभृद्घनो-ल्लासी कोऽपि महीतले स जयति **श्रीमाल**नामा नवः ॥ २ ॥

वंशेऽत्र तेजोऽद्भुतवृत्तशाली मुक्तामणि**र्वोसरि**संज्ञकोऽभूत् ।
तस्यौ न केषां हृदये गुणेन निजेन यश्छिद्रविनाकृतोऽपि ॥ ३ ॥

शचीव देवराजस्य रोहिणीव सितद्युतेः । सद्वासनेव धर्मस्य **लक्ष्मी**स्तस्य प्रियाऽभवत् ॥ ४ ॥

अचलस्थितिः कुरंगव्याघातिनखरवृत्तिसंयुक्तः । सिंह इव **वैरसिंहः** सुतः सुता चानयो**र्मांदूः** ॥ ५ ॥

गेहिनी गेहनीतिज्ञा तस्य श्रीरिव देहिनी । अभूदा**ऽऽनलदेवी**ति धर्मकर्मसु कर्मठा ॥ ६ ॥

असूत सा पंच सुतान् मनुष्यक्षेत्रस्य धात्रीव सुमेरुपर्वतान् । परं सदाप्येकसुखत्वमेषां केषां न रेखाकरमस्ति चित्ते ॥ ७ ॥

आद्योऽस्ति भांडशालिक**मदनो लाडि**पतिर्जिनप्रतिमाः । कारितवान् **मंगलपुर**चैत्ये पुण्याय पितृमात्रोः ॥ ८ ॥

प्रवरां **वेलाकूले** पौषधशालां च मातृपुण्याय । तनया विनयादिगुणोपेताः पंचास्य विद्यंते ॥ ९ ॥

**क्षेमसिंह-भीमसिंहौ तेजःसिंहा-ऽरिसिंहकौ** । पंचमो **जयसिंह**स्तु दुहिता **जासला**भिधा ॥ १० ॥

प्रथमोऽपि धर्मकार्ये द्वितीयीकस्तु लघुबंधुः । कलिकालमत्तकरिवरसिंहो **विजयसिंहो**ऽस्ति (?) ॥ ११ ॥

यथा प्रभा प्रभाभर्तुर्यथा चंद्रस्य चंद्रिका । यथा छाया शरीरस्य तथाशेषगुणाश्रया ॥ १२ ॥

**पूनी** दयिताऽस्योदय**पालो-दयमति**सुता विरेजे या । निजवंशप्रासादे विमलगुणा वैजयंतीव ॥ १३ ॥ युग्मम् ॥

आद्योऽस्ति **राजसिंह**स्तत्तनयो **जैत्रसिंह** इतरस्तु ।
**नायकि-सहजल-सोहग-पद्मल**नाम्न्यस्तु पुत्र्य इमाः ॥ १४ ॥

---

* एतत्प्रशस्तियुक्तं ताडपत्रात्मकं पुस्तकं पत्तने संघसत्कभाण्डागारे विद्यते । अन्तिमपत्रस्य नष्टत्वात् प्रशस्तिरपूर्णप्राया । द्रष्टव्यम्–पिटर्सन् रीपोर्ट पुस्तक ५, पृ० ९१ ।

नयनाभ्यां मुखं पुष्पदंताभ्यां गगनं यथा । आभ्यां **विजयसिंहो**ऽपि सुताभ्यां शोभते तथा ॥ १५ ॥
धर्मकर्मसुनिष्णातस्तार्त्तीयीकस्तु **धंधलः** । वल्लभो **बकुलदेव्या**स्तुर्यो **वरणिगा**भिधः ॥ १६ ॥
............... **जाल्हण**स्तु पंचमकः । दधतापि येन लघुतां बंधुषु भेजे परां गुरुतां ॥ १७ ॥
स्मरः शरैर्मानुषभूमिदेशः सुमेरुशैलैस्तनुरिंद्रियैर्यथा । पांडुस्तनुजैरिव **वैरसिंहो** रेजे तथा पंचभिरेभिरंगजैः ॥ १८ ॥

इतश्च–

श्रीमन्महावीरजिनेंद्रतीर्थकल्पद्रुगच्छे इह **चंद्रगच्छे** । शब्दान्वितः सुंदरपक्षयुग्मो द्विरेफलीलामवलंबमानः ॥ १९ ॥

.............................. [ अपूर्णा ] ..............................

# [ ५९ ]

## पल्लीपालान्वय-श्रे० जसदूसन्तान-लेखित-[ माणिक्यचन्द्राचार्यविरचित ] पार्श्वनाथचरित-पुस्तकप्रशस्तिः* ।

[ † प्रशस्तेरपूर्णत्वात् लेखनकालो नोपलब्धः । ]

**रस[६]र्षि[७]-रवि[१२]**-संख्यायां समायां दीपपर्वणि । समर्थितमिदं **वेलाकूले** श्री**देवकूपके** ॥ ३६ ॥
ग्रंथाग्रं ५२७८ ॥ मंगलमस्तु ॥

॥ श्रीपार्श्वनाथाय नमः ॥

यत्रानेकबुधा अनेककवयो धिष्ण्यानि भूयांस्यलं, चंद्रस्योपचयः कलंकविकलः संजायते सर्वदा ।
वक्रः कोऽपि न दृश्यते न च गुरुर्मित्रोदये निःप्रभः, **पल्लीपाल**जनान्वयो नवनभोलक्ष्मीं दधानोऽस्ति सः ॥ १ ॥
तत्रोल्लासितलोकभूरिकमलः श्लिष्यत्प्रतापाकृती, राजा मंडलवृद्धिकारणतया प्रीतिं समुत्पादयन् ।
दोषातिक्रमजातकांतिसुभगो बिभ्रत्सुवृत्तां तनुं, मार्त्तंडो **जसदू**र्धनी समभवन्नं**दाणिपू**र्मंडनम् ॥ २ ॥
तद्भार्या योषितां वर्या परिचर्यापरायणा । जिनेशचरणद्वंद्वे शोभना **शोभना**ऽजनि ॥ ३ ॥
महाव्रतानीव सुताः स्युस्ताभ्यां पंच विश्रुताः । गुप्तित्रयमिवावद्यं पुत्रीत्रयं च जज्ञिरे ॥ ४ ॥
तेषां च ज्येष्ठः किल **पूर्णचंद्रो** धर्मानुरक्तो **यशश्चंद्र**नामा ।
औचित्यचर्याचतुरस्त्व**आभड-नाहड-जाल्हणा**श्च तथा परे (?) ॥ ५ ॥
**शीलमती** च **सहजू रत्नी** च श्रावकव्रतम् । श्री**यशोभद्र**सूरीणां चरणांते प्रपेदिरे ॥ ६ ॥
**कल्हणा-ऽऽल्हण-रत्ना**श्च **राजपाल**श्चतुर्थकः । **पूर्ण**स्यागण्यपुण्यस्य तनयाः सुनया अमी ॥ ७ ॥
**कल्हणा-ऽऽल्हण-रत्ना**नां सुताः संति यथाक्रमम् । **अजय**श्चा**रिसिंह**श्च गुरुदेवार्चने रतौ ॥ ८ ॥
सुगुणसुवर्णशाली वित्राणेनैव गुरुगणाक्रमणम् । सुकवेः श्लोक इव स्तनंधय**स्तिहुणपालो**ऽभूत् ॥ ९ ॥
**यशश्चंद्र-जगदेवो**ऽभूत्ततोऽपि **वरदेवः** । **आभडः** श्री**मानतुंग**चरणांभोजषट्पदः ॥ १० ॥
**आभड**स्य सुता एतेऽ**भयश्री**कुक्षिसंभवाः । पांडवा इव विख्याताश्चित्रं कौरवसंगताः ॥ ११ ॥
प्रथमः **पद्मसिंहा**ख्यो **वीरचंद्रो** द्वितीयकः । **आसलो मूलदेव**श्च **देदल**श्चाथ पंचमः ॥ १२ ॥

.............................. [ प्रशस्तिरियमपूर्णा ] ..............................

---

* ताडपत्रात्मकं पुस्तकमिदं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यते । द्रष्टव्यम्–पिटर्सन् रीपोर्ट पुस्तक ३, पृ. १६३ ।

† अन्तिमपत्रस्य नष्टत्वात् प्रशस्तेरस्या अपूर्णत्वम् ।

# [ ६० ]

## पल्लिपालवंशीय-श्रा० कुमरदेवी-लेखित-औपपातिक-राजप्रश्नीयसूत्रद्वय-पुस्तकप्रशस्तिः* ।

[ लेखनकालः प्रायः १४ शताब्दी ]

आनंदकंदोद्गमवारिवाहः सदा सुरश्रेणिनरेंद्रवंद्यः ।
प्रभाभिरामो भवतां विभूत्यै भवेत्प्रभुश्रीजिन**वर्द्धमानः** ॥ १ ॥
सच्छायपर्वो घनजैनधर्मः स्थानेषु सर्वेषु विशेषितश्रीः ।
वंशः प्रसिद्धो भुवि**पल्लिपाला**-भिधोऽस्ति भूमीभृति लब्धरूपः ॥ २ ॥
अजनिष्ट विशिष्टश्रीः तत्र मुक्तामणिप्रभः । **अरिसिंहो** महत्तेजो **कुमरदेवी** च तत्प्रिया ॥ ३ ॥
श्रीमत्सूरि**जिनप्रभां**ह्रिकमले धर्म्मं प्रपद्यानघं, या तुर्यां प्रतिमामुवाह विधिवत्सुश्रावकाणां मुदा ।
श्रद्धावृद्धित एव वित्तवपनं क्षेत्रेषु सप्तस्वथो, तन्वंती तनुजानसूत मनुजाधीशः (?) समाजस्तुतान् ॥ ४ ॥
प्रथमोऽ**जयसिंहा**ख्योऽ**भयसिंह**द्वितीयकः । **आमकुमारो** मारश्रीः **धांधलो** धीरधीरभूत् ॥ ५ ॥
अतः (? थ) चतुर्णां गृहिणीः स्पृहणीयसतीगुणाः । संततिं पुत्रपौत्राद्यां परिवर्णे यथाक्रमं ॥ ६ ॥
पत्न्याव**जयसिंह**स्य **हीरू-गउरि**संज्ञिते । **वील्हण-सांगणौ** पुत्रौ **हीरू**कुक्षिसमुद्भवौ ॥ ७ ॥
**हांसला**ख्या प्रियाद्यस्य नाम्ना **ज्झंजबहू ( ? झांझ-बडू )** सुतौ ।
**सुहागदेवी** सद्धर्म्मचारिणी **सांग**स्य तु ॥ ८ ॥
वल्लभाऽ**भयसिंह**स्य **नायिकि**र्नयनामृतम् । सुतश्चा**ल्हणसिंहो**ऽस्याऽ**ऽल्हणदेवी** च तत्प्रिया ॥ ९ ॥
**आल्हणसिंह**स्वसा स्वस्तिश्रस्त्रि(?)कुल भूषणं । **सोहगा**मियदेजास्यः (?) **संग्रामः सोहगांगजः** ॥ १० ॥
पत्नी **त्वामकुमारस्य धनदेवी** गुणोज्वला । जिनाज्ञासरसीहंसावा**सचंद्रा-ऽऽजडौ** सुतौ ॥ ११ ॥
पुत्रिकात्रितयं **चंपल्लता-महण**देव्यथ । **सुहवा मल्लसिंह**स्तु **चंपला**यास्तनूरुहः ॥ १२ ॥
**जयतल**देवी नाम्नाऽस्त्या**सचंद्र**स्य वल्लभा । **अमरसिंह**प्रभृतयः पुत्राः पितरि वत्सलाः ॥ १३ ॥
तुर्यस्य **धांधल**(स्य) स्यात्तत्प्रिया **धांधलदे**विका । तत्सुत**सोम**नामास्ति **सहजला**ऽस्य च प्रिया ॥ १४ ॥

इतश्च —

अश्रावि सुश्राविकया **कुंरदेव्या** ऽन्यदा मुदा । श्री**जिनप्रभ**सूरीणां गुरूणां धर्मदेशनाम् ॥ १५ ॥
उदयं नीतो दिनकृत् शशी च तेनेह दीपितो दीपः । नयनं च कृतं जगतां जिनवचनं लेखितं येन ॥ १६ ॥
**अथौपपातिको**पांग**राजप्रश्नीय**पुस्तकम् । निशम्य देशनां तां सा स्वश्रेयार्थं व्यलीलिखत् ॥ १७ ॥
श्री**रत्नसिंह**सूरीणां गच्छे **आगम**संज्ञिते । सूर्युपाध्यायसाधूनां व्याख्यानार्थमदान्मुदा ॥ १८ ॥

॥ शुभं भवतु श्रीसंघस्य ॥ छ ॥ छ ॥

---

* एतत्प्रशस्तियुक्तं ताडपत्रात्मकं सूत्रद्वयपुस्तकं पुण्यपत्तने भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरावस्थितराजकीयग्रन्थसंग्रहे विद्यते । द्रष्टव्यम्–N0 72 of 1880-81. Catalogue 1. 170.

# [ ६१ ]

## श्रीमालवंशीय-श्राविकासलवणा-प्रदत्त-[ अजितप्रभाचार्यरचित ]-शान्ति-जिनचरित-पुस्तकप्रशस्तिः* ।

[ प्रदानसमयः प्रायः १४ शताब्दी ]

विश्वसेनकुलोत्तंसोऽचिरादेवीतनूद्भवः । श्रीशान्तिनाथो भगवान् दद्यान्मंगलमालिकाम् ॥ १ ॥
संघाधिपत्यादिपदप्रतिष्ठासमन्वितैर्भव्यजनैर्विशालः । दानादिपुण्योदयजन्मभूमिः श्री**मालवंशो** विदितो जगत्याम् ॥ २ ॥
बभूव तत्रांबुधितुल्यरूपे परोपकारादिगुणैः प्रसिद्धः । कल्पद्रुकल्पोऽर्थिजनस्य धीमान् **रत्ना**भिधानो वररत्नतुल्यः ॥ ३ ॥
**सहजाकः** सुतस्तस्य रेजे राजसभोचितः । धर्मकृत्यरतो नित्यं निजवंशविभूषणः ॥ ४ ॥
तस्यात्मजो धार्म्मिकचक्रचूडामणिः सुधाकारगिरांनिवासः । सतां हि सेव्यः किल **नागसिंहः** कुलोदयायैव कृतावतारः ॥५॥
साऽऽह्लादना**ह्लादना**नाम तदंगनाऽभूत् साह्लादवक्त्रा गुरुदर्शनेन । यया चतुष्कं सुषुवे सुतानां स्ववंशभारोद्धरणैकधीरम् ॥६॥
**हरिराजो** विवेकेन रराज हरिविक्रमः । **स्थिरपालः** स्थिरप्रेमा साधुवर्गे विशेषतः ॥ ७ ॥
**प्रतापमल्लः** सुभगः सद्दाक्षिण्यमहोदधिः । **चतुर्भुज**श्चतुर्द्धर्मसमाचारपरायणः ॥ ८ ॥
भगिनी **सुगुणा** नाम सद्गुणानां निकेतनम् । **लाखा**केन परीणिन्ये कमलेव मुरारिणा ॥ ९ ॥
तथा **सलवणा** नाम स्वसा लावण्यशालिनी । स्वकीयेन च शीलेन पवित्रितनिजान्वया ॥ १० ॥
श्री**पद्मप्रभ**सूरीणां स्वगुरूणां मुखांबुजे । शुश्रावेति महाभक्ता श्राविका सुगुणा गिरम् ॥ ११ ॥
जिनेंद्रबिंबं भवनं जिनस्य संघः सपूज्यश्च चतुःप्रकारः । सत्पुस्तकं तीर्थकरावदातविभूषितं यः कुरुते सुबुद्धिः ॥ १२ ॥
बोधिबीजं भवेत्तस्य निश्चलं च भवांतरे । केवलज्ञानलाभश्च ततो मोक्षसुखं पुनः ॥ १३ ॥
आकर्ण्य वाचं सुकृतैकबुद्धिः श्रीशान्तिनाथस्य जिनेश्वरस्य । पुण्यावदातेन युतं गुरुभ्यो ददौ शुभं पुस्तकमुत्तमं सा ॥१४॥
**जंबूद्वीपां**तरे यावचतुर्वनविराजितः । अर्हच्चैत्ययुतो **मेरु**स्तावन्नंदतु पुस्तकम् ॥ १५ ॥
शुभं भवतु लेखकपाठकयोः । मंगलं महाश्रीः ॥

[ अन्याक्षरैः पश्चाल्लिपिः- ]

**जंबूद्वीपाल**वालः कनकगिरिमहाकल्पवृक्षाभिराम-स्तारालीपुष्पपूर्णः शशिधरतपनाभोगपत्रावलीढः ।
अग्रण्यानंतषट्कप्रचुरफलभरो राजते यावदित्थं, ग्रन्थोऽयं वाच्यमानो जयति बुधगणैः श्रोतृपीयूषकल्पः ॥ १ ॥
सुविवेगो संवेगो सुहगुरुजोगो कसायभंगो य । पत्ते दाणपसंगो न हुन्ति थोवेहिं पुन्नेहिं ॥ २ ॥
न ते नरा दुर्गतिमाप्नुवंति न मूकतां नैव जडस्वभावम् । न चांधतां बुद्धिविहीनतां च ये वाचयंतीह जिनेंद्रवाक्यम् ॥३॥
ओजस्तेजोगुणा धैर्यं विवेको विक्रमो नयः । लावण्यं सौम्यता शैत्यं सलक्षत्वोपकारिता ॥ ४ ॥
नयो गम्भीरता स्थैर्यं दाक्षिण्यं ऋजुशीलता । दातृवक्तृगुणान् दृष्ट्वा श्रीसंघे श्रीरवातरत् ॥ ५ ॥
जयंति जितमत्सराः परहितार्थमभ्युद्यताः, पराभ्युदयसंस्थिताः परविपत्तिखेदाकुलाः ।
महापुरुष········श्रवणजातरोमोद्गमाः, समस्तदुरितार्णवप्रकटसेतवः साधवः ॥ ६ ॥

[ पुनरन्याक्षरैः पश्चाल्लेखः- ]

पूर्वोपात्तसुपुण्यबीजकमलं प्राप्य प्रमोदान्वितः, सत्पुण्योपचयं विधातुममलां सद्ज्ञानलक्ष्मीं स्थिराम् ।
श्रीजैनेंद्रागमसारमेतदनघं चित्रं चरित्रं मुदा, श्रीमच्छांतिजिनेश्वरस्य **सुभटः** संघान्वितोऽवाचयत् ॥ १ ॥

* एतत्प्रशस्तियुक्तं ताडपत्रात्मकं पुस्तकं पत्तने संघसत्कभाण्डागारे विद्यते ।

भूपादिकार्यकरणे सुभटः दीनादिमार्गणजने सुभटः । सन्मार्गचारुचरणे सुभटः क्रोधादिवीरविजये सुभटः ॥ २ ॥

श्रीमन्महेन्द्रो विजयाख्यसिंहो देवेन्द्रचन्द्रः शुचिपद्मदेवः ।
श्रीपूर्णचन्द्रो जयदेवसूरिर्हेमप्रभो नाम जिनेश्वरश्च ॥ १ ॥

–श्रीआमदेवसूरि । श्रीधर्म्मरत्नसूरि । श्रीविबुधप्रभसूरि । श्रीप्रज्ञातिलकसूरि । श्रीभावदेवसूरि । श्रीगुणसमुद्रसूरि । श्रीविनयचंद्रसूरि । श्रीमलयचन्द्रसूरि ॥

[ पश्चात्केनापि पूर्तिरूपे निक्षिप्तेऽन्यपत्रेऽनुपूर्तिरूपो द्वितीयो लेखः– ]

सुश्रावकाग्रिमगुणै रचितावतंसः संसारमोक्षपयसोर्विवृतौ सुहंसः ।
श्रीवीतरागपदसंस्मृतिशुद्धहंसः पेथाभिधोऽजनि जनैर्विहितप्रशंसः ॥ १ ॥

श्रीजीवानन्दतुल्योऽभूत् कृपया साधौ जनेऽखिले । तत्पुत्रौ सद्गुणैः ख्यातौ सदाचारधुरंधरौ ॥ २ ॥

प्रतापमल्ल-प्रल्हादौ सप्तक्षेत्र्यां कृतोद्यमौ । पुण्यश्रियां सरागौ यौ शुद्धे यशसि लोलुपौ ॥ ३ ॥

पूर्वोपात्तसुपुण्यबीजकमलां प्राप्य प्रमोदान्वितः, सत्पुण्योपचयं विधातुममलां सज्ज्ञानलक्ष्मीं स्थिराम् ।
श्रीजैनागमसारमेतदनघं चित्रं चरित्रं मुदा, श्रीमच्छांतिजिनेश्वरस्य जनताप्रल्हादकोऽवाचयत् ॥ ४ ॥

[ पुनरन्याक्षरैः पश्चाल्लेखः– ]

चतुर्वेदैर्वलैर्भूमिदेवैर्भुवि विनिर्मिते । त्रिधा हुताग्निप्राकारे वेदाचारचतुर्मुखे ॥ १ ॥
चक्रस्वाम्यादिकैर्देवैर्देवीभिर्विजयादिभिः । नानायुधकरैः शान्तैः चतुर्द्वारोपशोभिते ॥ २ ॥
अशोकेऽर्कप्रभायुक्ते सप्तेतिद्वेषवर्जिते । जाल्योधरे विश्वमान्ये सर्वज्ञास्थानसन्निभे ॥ ३ ॥
श्रीमत्संघह्रदासीनभावार्हन्मुख्यवर्तिनाम् । जिनानां वर्द्धतात्साधुगणे पूजामहोदयः ॥ ४ ॥

शांतिस्तत् ब्रह्मलोकस्य क्षेमं स्थानं निवासिनाम् । आरोग्यं विप्रभक्तानां शिवं संघस्य शाश्वतम् ॥ ५ ॥

सागर-सज्जनमुख्याः कृष्णाभिधवामदेवगुणकलिताः । यस्मिन् मंगलकलशाः जनताहितकारिणो भांति ॥ ६ ॥

यस्योपसर्गाः स्मरणे प्रयांति विश्वे यदीयाश्च गुणा न मान्ति ।
यस्याङ्गलग्ना ··························स्य कान्ति संघस्य शान्ति स करोतु शान्तिः ॥ ७ ॥

[ पुनरप्यन्याक्षरैः पश्चाल्लेखः– ]

वार्द्धक्ये केऽपि रोगार्त्ताः केऽप्यसारा जरद्गवः । बुद्ध्याऽन्ये जांबवत्तुल्या अन्ये लोकपितामहाः ॥ १ ॥
स्थैर्यौदार्यगुणैर्युक्तौ श्रीमत्संघपुरस्कृतौ । मेहा-भीमाभिधौ श्राद्धौ धर्मकर्मधुरन्धरौ ॥ २ ॥

## [ ६२ ]

## हुंबडवंशीय-श्रे० झंझाक-लेखित-धर्मशर्माभ्युदयकाव्य-पुस्तकप्रशस्तिः* ।

[ लेखनकालो न निर्दिष्टः । ]

अथास्ति गूर्जरो देशो विख्यातो भुवनत्रये । धर्मचक्रभृतां तीर्थैर्धनाढ्यैर्मानवैरपि ॥ १ ॥
विद्यापुरं पुरं तत्र विद्याविभवसंभवम् । पद्मः शर्करयाख्यातः कुले हुंबडसंज्ञके ॥ २ ॥

तस्मिन् वंशे दादनामा प्रसिद्धो भ्राता जातो निर्मलाख्यस्तदीयः ।
सर्वज्ञेभ्यो यो ददौ सुप्रतिष्ठां तं दातारं को भवेत्स्तोतुमीशः ॥ ३ ॥

* पत्तने संघसत्कभाण्डागारे ताडपत्रात्मकस्य पुस्तकस्य प्रांते इयं प्रशस्तिर्लिखिता लभ्यते ।

**दादस्य** पत्नी भुवि **मोषला**ख्या शीलांबुराशेः शुचि चंद्ररेखा ।
तन्नंदनश्चा**हनिदे**विभर्ता **देपाल**नामा महिमैकधामा ॥ ४ ॥
ताभ्यां प्रसूतो नयनाभिरामो **झंझाक**नामा तनयो विनीतः ।
श्रीजैनधर्मेण पवित्रदेहो दानेन लक्ष्मीं सफलां करोति ॥ ५ ॥
**हानू-जासल**संज्ञकेऽस्य सुभगे भार्ये भवेतां द्वये, मिथ्यात्वद्रुमदाहपावकशिखे सद्धर्ममार्गे रते ।
सागारव्रतरक्षणैकनिपुणे रत्नत्रयोद्भासके, रुद्रस्येव नभोनदी-गिरिसुते लावण्यलीलायुते ॥ ६ ॥
श्री**कुंदकुंद**स्य बभूव वंशे श्री**रामचंद्रः** प्रथितः प्रभावः ।
शिष्यस्तदीयः **शुभकीर्त्ति**नामा तपोऽङ्गनावक्षसि हारभूतः ॥ ७ ॥
प्रद्योतते संप्रति तस्य पट्टं विद्याप्रभावेण **विशालकीर्त्तिः** । शिष्यैरनेकैरुपसेव्यमानः एकांतवादाद्रिविनाशवज्रम् ॥ ८ ॥
जयति **विजयसिंहः** श्री**विशाल**स्य शिष्यो जिनगुणमणिमाला यस्य कंठे सदैव ।
अमितमहिमराशेर्धर्मनाथस्य कंठे निजसुकृतनिमित्तं तेन तस्मै वितीर्णम् ॥ ९ ॥ छ ॥
तैलाद्रक्ष जलाद्रक्ष रक्ष शिथिलबंधनात् । परहस्तगतां रक्ष एवं वदति पुस्तिका ॥ १० ॥
भग्नपृष्टि कटिग्रीवा एकदृष्टिरधोमुखम् । कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥ ११ ॥
यादृशं पुस्तके दृष्टं तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १२ ॥

# [ ६३ ]

## हुंबडवंशीय-श्रे०आम्बदेवसंतानसत्केकाऽपूर्णा प्रशस्तिः* ।

.................................................................................. ।

श्रीमत्**खेटपुरो**द्भवोच्चजनताधारो मनोनंदनः, ख्यातः प्रांशुगुणेन धर्म्मवसतिः श्री**हुंबडानां** वरः ॥ १ ॥
श्रेष्ठी तत्रा**म्बदेवो** शुभगुणकलितो ......[ दाक्षि ]ण्यौदार्यभूमि ......लोकनयविनयदयाकीर्तिशाखाभिरामः ।
सद्दाक्षिण्यप्रसूनो विशदशुचिगुणस्कन्धसाधुप्रसिद्धः, आसीदाम्रोपमानः प्रणयिनि जनतातापरक्षैकदक्षः ॥ २ ॥
**वाटापल्ली**पुरीयचैत्यभवने शांतेर्जिनेशप्रभोः ................................................................ ॥
सद्बद्धोपलपीठदेवकुलिकास्तीर्थेषु यात्राः पराः, सद्धर्मोऽमलधीरचीकरदसौ पुण्योदयाय व्यधात् ॥ ३ ॥
तद्भार्या शीलसद्धर्मकर्मलालसमानसा । **सावित्रि**रिति विख्याता बभूवेव प्रजापतेः ॥ ४ ॥
नानाशास्त्रविचारकोविदधियः संपत्सु नैवोद्धुरा..................सैकहृदया औझन्त्र चापत्सु ते ।
ध्वस्ताशेषकुवादिसद्गुरुवरास्यांभोजनिर्यद्वचो, धर्म्मध्यानविधिप्रसाधितमहाकल्याणकोशाः सुताः ॥ ५ ॥
प्रबभूवुस्तयोः श्रेष्ठाः पंचामी पांडवा इव । शीलांबुविमलक्षेत्रं पुत्रीणां च चतुष्टयम् ॥ ६ ॥
तत्राद्यः **सर्वदेवा**ख्यः श्रे..............[ णा ] करः । **संधीरणो** द्वितीयश्च तृतीयोऽ**म्बकुमार**कः ॥ ७ ॥
तुर्यो **नमिकुमारा**ख्यः पंचमो **बोहडि**स्तथा । सद्दानतोषिताशेषमार्गणौघः सतां वरः ॥ ८ ॥
**सज्जना संतुका** चैव **साउका सुंदरी**ति च । चतस्रः प्रीतिसंयुक्ता धर्म्मकर्मपरायणाः ॥ ९ ॥
उ(?)डास्थान.........दयजिता शेषाद्रिलसज्जैनावा[सव ?].........सार्जितोर्जितमहापुण्योदयात् संप्रति ।
तत्राद्यस्य शशांकनिर्मलभरा कीर्तिस्त्रिलोकांगणे नृत्यत्युन्मदनर्तकीव विलसद् न्यायात्तवित्तव्ययात् ॥ १० ॥

---

* पत्तने संघसत्कभाण्डागारे त्रुटितताडपत्राणां मध्ये एकस्मिन् पत्रे इयं खण्डितप्राया प्रशस्तिर्लब्धा ।

अनुत्तमगुणग्रामा शीलालंकारशालिनी । श्रेष्ठिनः············स्य जाया **जीवनसुंदरिः** ॥ ११ ॥
तन्नंदनाः सत्प्रसवाभिरामाः शश्वत्फलाः पंचजनोपकारं ।
मन्ये सुराणां तरवः प्रपन्नाः पंचापि कर्तुं मनुजंगमत्वम् ॥ १२ ॥
अभवद् **धवलः** पूर्व्वः **नागदेव**स्ततोऽपरः । **पार्श्वदेव**स्तृतीयस्तु तुर्यश्च**क्रेश्वर**स्तथा ॥ १३ ॥

························ [ अपूर्णा ] ························

# [ ६४ ]

## ताडपत्रसंग्रहगता एका अपूर्णा प्रशस्तिः* ।

× × × × ×

**ब्रह्मा**भिधस्य सद्भार्या **लङ्किका**गुणशालिनी । पुत्रत्रयं तथा रम्यं भूषितं धर्म्मकर्म्मणा ॥ १८ ॥
आद्यः **सितगुणो** जज्ञे द्वितीयः **सोहडा**भिधः । तृतीयः **सोढका**ख्यश्च जातो धर्म्मपरायणः ॥ १९ ॥
गृहिणी **सितगुण**स्यापि **सोढूः** पुत्रद्वयान्विता । **पाल्हण-गुणपाला**ख्यौ पुत्री **जयतुका**भिधा ॥ २० ॥
श्रेष्ठिनः **सोहड**स्यापि गृहिणी गुणमंदिरम् । **लाच्छि**नामाथ संजाता सरला शीलशालिनी ॥ २१ ॥
**लक्षक**स्य तथा पुत्रास्त्रयो रम्या विशारदाः । **भीमाकः पाहड**श्चैव **धांधलो**ऽथ तृतीयकः ॥ २२ ॥
**भीमाक**स्य कलत्रे द्वे **माल्हणि-रत्नदेवि**का । आद्यासुतो हि **बोडाकः** द्वितीयाखे**त्र-पांतुकौ** ॥ २३ ॥
**पाहड**स्य प्रिया जाता **नाइकि**र्भद्रभावका । **बहुदा**कः सुतो जज्ञे द्वितीयः **पूर्ण**नामकः ॥ २४ ॥
**धांधल**स्य प्रिया **मोखू** जाता धर्म्मपरायणा । चत्वारः सूनवस्तस्या व्रतं जग्राह साऽन्यदा ॥ २५ ॥
द्वितीया **वल्लुण**स्याथ पत्नी **सोहगदेवि**का । षट्सूनवस्तस्या जाताः पुत्रीद्वयसमन्विताः ॥ २६ ॥
आद्यो **जयतसीह**श्च **बीजड**श्च **पद्मा**भिधः । **महणाह्वः खेतसिंहः पासडो**ऽथ शुभाशयः ॥ २७ ॥
पुत्री **माधल**संज्ञाऽथ दयाधर्म्मेण वासिता । अन्या **कुमरि**नामा हि शुभचित्ता दयापरा ॥ २८ ॥
पत्नी **जयतसिंह**स्य **षेतू**र्गुणशालिनी । **विल्हुका बीजड**स्याभूत् जाया मायाविवर्ज्जिता ॥ २९ ॥
प्रथमो **जगसिंहो**ऽभूत् **झांझणो**ऽपि द्वितीयकः । तृतीय **आम्रसिंह**श्च **हरिपाल**श्चतुर्थकः ॥ ३० ॥
**रुक्मिणी चांपला** चैव **जासला राणिका** तथा । चतुष्टयं च पुत्रीणां संजातं **विल्हुका**पतेः ॥ ३१ ॥
**पद्माक**स्य प्रिया जाता **पद्मला** पद्मलोचना । संताने पुत्रिका रम्या **हंसला** हंसगामिनी ॥ ३२ ॥
**महणाक**स्य संजाता पत्नी **पुहणीदेवि**का । पुत्रः **खयरा**भिधः जज्ञे कुलोद्धारे पराक्रमी ॥ ३३ ॥
··············· [ पुत्रपौ]त्रैरेतदीयपितामहैः । श्री**वर्द्धमानसूरि**भ्यः पूर्व्वं दापित······ ॥ ३४ ॥
अष्टादश सहस्राणि द्रम्मा जातास्ततस्तु तैः । ······ चैत्येऽस्मिन् कारिता पिचला मया ॥ ३५ ॥
श्रीशांतिनाथ······प्रतिमा रम्या परिकरान्विता । सौवर्णकलसो दंड आचार्यैः कारितो ध्रुवम् ॥ ३६ ॥

······················ [ अग्रे अपूर्णा ] ······················

---

* पत्तने संघवीपाडावस्थितभाण्डागारे अज्ञातग्रन्थपुस्तकस्य ताडपत्राणां मध्ये एकस्मिन् पत्रे इयं प्रशस्तिरुपलब्धा । पूर्व-पश्चात् पत्राणामभावादस्याः प्रशस्तेराद्यन्तभागोऽनुपलभ्यः ।

## [ ६५ ]

## ओसलंब-श्रावकसमूह-लेखित-पञ्चवस्तुक-कर्मस्तवटीका-पुस्तिकाप्रशस्तिः* ।

[ लेखनकाल ११७९ विक्रमाब्द ]

**( १ ) पञ्चवस्तुकग्रन्थप्रान्ते–**

**संवत् [ ११७ ] ९ फागुण वदि १२ रवौ** ॥ समस्तराजावलिविराजितमहाराजाधिराजश्रीमत्रिभुवनगंडश्री**जयसिंघदेव**कल्याणविजयराज्ये तत्पादप्रसादावाप्त…… **संतुक**प्रतिपचौ **लाटदेश**मंडलमनुशासयतीत्येतस्मिन्का [ ले प्रवर्तमाने ] **मोखदेवेन** पंचवस्तुकं लिखितमिति ॥

**( २ ) कर्मस्तवटीकाप्रान्ते–**

[ जि ] णपवयणबुद्धा जायसंवेगसद्धा । सुहगुरुक [ य ] सेवा……… सक्का ।
सुयवर निरु भत्ता साहुकज्जंमि सत्ता । सवणपउणचित्ता सावया **ओसलंवा** ॥ १ ॥
मलयावड-वहसरवरेहिं देउल्ल धम्मियरंसु । **ओसलम्व** जिणि पासि हुय मुत्तिमंतु नइ धंमु ॥ २ ॥
सामाइय-सज्झाए पढणे पडिकमणसवणवंदणए । पूयापभावणासु य जहसंभवमुज्जया सव्वे ॥ ३ ॥

**णेहा बोहडि सावदेव**पमुहा **अंमो सुसं( मं? )तो** तहा,
**वद्धू वच्छिग केसवो जसदिवो अत्तू** तहा **जज्जिगो** ।
सड्ढीओ **वइरुट्ट साउ महिमा सम्भा** य **अंमी** तहा,
सव्वासिं पि हु संमएण लिहिया एसा वरा पोत्थिआ ॥ ४ ॥

**संवत् ११७९ चैत्र वदि ७ भौमे** श्रीमत्**वटपद्रक मोखदेवेन** पुस्तिका लिखितमिति ॥ छ ॥

## [ ६६ ]

## मोढवंशीय-श्राविकालक्ष्मी-लेखित-विशेषावश्यकवृत्ति-पुस्तकप्रशस्तिः† ।

[ लेखनकाल १२९४ विक्रमाब्द ]

–इत्येषा शिष्यहिता नाम **विशेषावश्यकवृत्तिः** परिसमाप्ता ॥ छ ॥

यस्याघपूगः क्षयमेत्यशेषो ध्यानादपीहान्यभवेऽपि जातः । रवेरिव ध्वांतभरः प्रतापात्स वः प्रदेयाद्वृषभो जिनः शं ॥१॥
अस्तीह सद्रत्ननिवासधिष्ण्यमुरुप्रपंचावृतभूमिपीठः । श्रीमाननेकांगिगणाश्रयश्च सन्**मोढवंशः** सरिदीशतुल्यः ॥ २ ॥
तस्मिन्वंशे प्रसृतसुयशःपूरिताशाचतुष्को, दक्षत्वाद्यैर्वरगुणगणैरन्वितः श्रावकोऽभूत् ।
सम्यक्त्वाढ्यो वरगुरुगिराऽपास्तमिथ्यात्वमोहः, **शांत्या**ह्वानो जिनपतिपदांभोजयुग्मद्विरेफः ॥ ३ ॥
शीलालंकृतकाया दानदयोद्युक्तमानसा सततम् । जिनपूजारतचित्ता **यशोमति**स्तस्य वरपत्नी ॥ ४ ॥
ताभ्यामादिजिनेंद्रपूजनविधावासक्तचित्तोऽनिशं, सूनुः सर्वजनोपकारकरणप्रह्वः कृपामंदिरम् ।
नित्यं सद्व्रतिवर्गदानिरतो मानादिदोषोज्झितो, गांभीर्यादिगुणौघलब्धमहिमा **प्रद्युम्न**संज्ञोऽजनि ॥ ५ ॥

---

* पञ्चवस्तुक-कर्मस्तवटीका-ग्रन्थयुगलयुक्ता ताडपत्रीयैषा पुस्तिका पुण्यपत्तने भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरावस्थिते राजकीयग्रन्थसंग्रहे विद्यते । सूचिक्रमांक ४२, १८८०-८१

† पुस्तकमिदं पुण्यपत्तने भा० प्रा० सं० मं० राजकीयग्रन्थसंग्रहे विद्यते । सूचिक्रमांक ५८, १८८०-८१; द्रष्टव्यम्–किल्होर्न रीपोर्ट, पृ० ३८-४० ।

इतश्च—इहैव वंशे जिनपादभक्तः सुश्रावको **वोसक**संज्ञकोऽभूत् ।
सुधर्मकर्मोद्यतमानसा च तस्याग्र्यभार्याऽजनि **सेसिका**ख्या ॥ ६ ॥
तस्याः **साहड**संज्ञकः सुचरितः सूनुर्महात्माऽभव-च्छ्रेष्ठा चारुचरित्रलक्षणवती पुत्री च **लक्ष्मीं**गिता ।
या लक्ष्मीरिव केशवस्य दयिता **प्रद्युम्न**नाम्नो गृहे, विख्याताऽऽत्मगुणोत्करेण जनताचेतश्चमुत्कारिणा ॥ ७ ॥
अपत्यसप्तकं तस्या बभूव गुणमंदिरम् । सुतास्त्रयो महात्मानश्चतस्रः पुत्रिकास्तथा ॥ ८ ॥
ज्येष्ठः सूनुरुदारतादिभिरिह प्राप्तप्रसिद्धिर्गुणै-रग्र्यै**राम्रयशो**भिधो जिनमहव्यासंगतन्निष्ठधीः ।
स्वच्छंदं विचरन् वरेण्यकरिवद्यः कीर्त्तिगंधाहृतैः, सद्दानासवलिप्सयाऽर्थिमधुपव्रातैः सदा सेव्यते ॥ ९ ॥
वोढुं नियुक्तोऽखिलकार्यभारधुरं सुधौरेय इव स्वपित्रा ।
दम्योऽपि यस्तां वहति स धीमान् विश्रब्धचेताः परकार्यहेतोः ॥ १० ॥
जिनमानरतो नित्यं द्वितीयो **धवला**भिधः । सद्गुणाकरचाक्षुण्यस्तृतीयो **जेसला**ह्वयः ॥ ११ ॥
**यशोमति**र्ज्येष्ठसुता वरेण्या तथापरा **श्री**रिति चारुपुत्री ।
सुशीलयुक्ताऽथ च **रुक्मिणी**ति **राजीमती** तुर्यसुता बभूव ॥ १२ ॥
ततश्च—श्री**वर्द्धमाना**ख्यपुरे वरिष्ठे संतिष्ठमाना सदयाऽन्यदाऽथ ।
श्री**देवभद्रा**ख्यमुनींद्रमूले शुश्राव **लक्ष्मी**र्वरदानधर्म्मम् ॥ १३ ॥
तद्यथा—विज्ञाय प्रबलप्रभंजनचलद्दीपांकुरालीसमं, लोके जीवितयौवनार्थविषयप्रेमाद्यशेषं सदा ।
धीमद्भिर्ध्रुवपुण्यसंग्रहकृते कर्मक्षयैकार्थिभिः, कर्त्तव्यः सुनयार्ज्जितात्मविभवैः सद्दानधर्मोद्यमः ॥ १४ ॥
ज्ञानोपष्टंभामयविभेदतस्त्रिविधमुक्तमिह दानम् । जिनमतजलधावाद्यं गृहिणां तत्रापि बहुफलदम् ॥ १५ ॥
यतः—मोहांधकारावृतचित्तदृष्टेर्ज्ञानप्रदीपो वृषवर्त्मदर्शी । भवार्णवाज्ञानजले निमज्जन्नृणां भवेज्ज्ञानमिहाग्र्यपोतः ॥ १६ ॥
ज्ञानं मुक्तिपुरीप्रतोलिपरिघप्रध्वंसनानेकपो, ज्ञानं नाकगिरींद्ररम्यशिखरप्रारोहसोपानकं ।
ज्ञानं दुर्गतिदुर्ग्गकूपपततामालंबनं देहिनां, ज्ञानं संशयपादपोरुविपिनच्छेदे कुठारः पटुः ॥ १७ ॥
तस्यैवमाचैर्यतिपुंगवेंदोश्चंचद्वचश्चारुमरीचिभिः सा । संबोधिता कैरविणीव पश्चादुज्जृंभमाणास्यसरोरुहेह ॥ १८ ॥
लेखयित्वाऽऽत्मसारेण **विशेषावश्यकस्य** हि । वृत्तेरिदं द्वितीयार्द्धं तस्मै सद्गुरवे ददौ ॥ १९ ॥
अपनयति तमिस्रं यावदर्केंदुबिम्बं दिनरजनिनिलीनं तीव्रशीतांशुसंघैः ।
इह जगति वरिष्ठं पुस्तकं तावदेतद्विबुधमुनिजनौघैः पठ्यमानं प्रनंद्यात् ॥ २० ॥
श्रीविक्रमाद्............धिं-ग्रहे-रुद्रसंख्यका..................तस्यां (?) समर्थितं प्रवरगुरुदिवसे ॥ २१ ॥
तद्गतात्मा विलिख्येदमा**शादित्या**भिधो द्विजः । निजप्रज्ञानुसारेण प्रशस्तिमकरोदिमाम् ॥ २२ ॥

# [ ६७ ]

## ऊकेशवंशीय-सा० आभा-लेखित-उपदेशमालादि-प्रकरणपुस्तिकाप्रशस्तिः* ।

[ लेखनकाल १४ शताब्दी ]

**ऊकेशवंशे** विदितप्रकाशे चार्वीं तुलां बिभ्रति शीतभानोः ।
जज्ञे बुधः सर्वविधिक्रियासु श्राद्धाग्रणी **लोहट**नामकोऽत्र ॥ १ ॥

* एतत्प्रशस्तियुक्ता पुस्तिका पुण्यपत्तने भां० प्रा० सं० राजकीयग्रन्थसंग्रहे विद्यते । सूचिक्रमांक २६६; सन् १८७१-७२ ।

तस्यांगजः समभवल्लषमाभिधानः श्राद्धः प्रबुद्धगुणरत्नविभूषितांगः ।
येन स्वराः सफलतामिह सिद्धिशैले लात्वा सुरेशपदमापि सुपुण्यभाजा ॥ २ ॥
तत्पत्नी समधर्म्मकर्म्मकुशला भोपीति नाम्ना बभौ, मूर्ता कल्पलतेव कोविदजनैर्या गीयतेऽहर्निशम् ।
दंपत्योर्गृहधर्म्ममाश्रितवतो जज्ञुस्त्रयो नंदनाः, पद्माख्यः प्रथमस्ततो निजगुरौ भक्त्युल्वणः पेथडः ॥ ३ ॥
माकंदशालतुलनां कलयंस्तृतीयः, सौरभ्यशालितवपुः पृथुलांशचंगः ।
आभाभिधः सुमुनिपात्रनियोजितस्व-स्वो व्याघ्रकादिमसुतैः सफलैर्वृतोऽभूत् ॥ ४ ॥
इतश्च–सद्भक्तिभावितमनःसुमलेखराजीप्रारब्धसादरनतिः कमनीयकान्तिः ।
सौवांह्रिचाररचितावनितारशान्तिश्चांद्रे कुले समभवज्जिनचंद्रसूरिः ॥ ५ ॥
विशददशनमालास्फारदीप्तिप्रचारस्फुटघटितचकोरप्राणिदृष्टिप्रमोदः ।
रजनिपतिसगोत्रस्तारकाधिष्ठितः श्रीजिनकुशलयतीन्द्रस्तत्कपट्टेऽजनिष्ट ॥ ६ ॥
यच्छेमुषीं समवलोक्य बभूव देवाचार्योऽपि संततमनिंदितवाग्विलासः ।
संजातकंप इव भूमितले स नंद्यात् आचंद्रमादरनुतो जिनपद्मसूरिः ॥ ७ ॥
तेषां निदेशादमरप्रभायोपदेशमालादिसुवृत्तिपुस्तम् । संलेखयामास विशुद्धवर्णं आभाभिधः श्राद्धवरप्रमोदात् ॥ ८ ॥
यावत् क्षमांगना दध्रे ताडंकौ चंद्रभास्करौ । तावन्नंद्यादिदं पुस्तं वाच्यमानं सदा बुधैः ॥ ९ ॥
॥ सा० आभालेखितपुस्तिकाप्रशस्तिः ॥

## [ ६८ ]

## ऊकेशवंशीय-श्राविकाहादू-लेखित-[ मलयगिरिविरचित ] सप्ततिकाटीका-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १४६२–६५ विक्रमाब्द ]

–संवत् १४६२ वर्षे माघशुदि ६ भौमे अद्येह श्रीपत्तने लिखितम् ॥ छ ॥ शुभं भवतु ॥
ऊकेशवंशसंभूतः प्रभूतसुकृतादरः । वासी सांडउसी-ग्रामे सुश्रेष्ठी महुणाभिधः ॥ १ ॥
मोघीकृताघसंघाता मोघीरप्रतिघोदया । नानापुण्यक्रियानिष्ठा जाता तस्य सधर्मिणी ॥ २ ॥
तयोः पुत्री पवित्राशा प्रशस्या गुणसम्पदा । हादूर्दूरीकृता दोषैर्धर्मकर्मैककर्मठा ॥ ३ ॥
शुद्धसम्यक्त्वमाणिक्यालंकृतः सुकृतोद्यतः । एतस्या भागिनेयोऽभूद् ओकाकः श्रावकोत्तमः ॥ ४ ॥
श्रीजैनशासननभोऽङ्गणभास्कराणां श्रीमत्तपागणपयोधिसुधाकराणाम् ।
विश्वाद्भुतातिशयराशियुगोत्तमानां श्रीदेवसुन्दरगुरुप्रथिताभिधानाम् ॥ ५ ॥
पुण्योपदेशमथ पेशलसन्निवेशं तत्त्वप्रकाशविशदं विनिशम्य सम्यक् ।
एतत्सुपुस्तकमलेखयदुत्तमाशा सा श्राविका विपुलबोधसमृद्धिहेतोः ॥ ६ ॥
बाणांगवेदेन्दुमिते( १४६५ ) प्रवृत्ते संवत्सरे विक्रमभूपतीये ।
श्रीपत्तनाह्वानपुरे वरेण्ये श्रीज्ञानकोशे निहितं तयेदम् ॥ ७ ॥

---

* एतत्प्रशस्तियुक्तं ताडपत्रीयपुस्तकं पत्तने संघवीपाडावस्थितभाण्डागारे विद्यते । मुद्रिता चेयं प्रशस्तिः श्रीमच्चतुरविजयमुनिवरैः स्वीय 'चत्वारः कर्मग्रन्थाः' नामकग्रन्थप्रस्तावनायाम्, पृ० २ ।

यावद् व्योमारविन्दे कनकगिरिमहाकर्णिकाकीर्णमध्ये, विस्तीर्णोदीर्णकाष्ठातुलदलकलिते सर्वदोज्जृम्भमाणे । पक्षद्वन्द्वावदातौ वरतरगतितः खेलतो राजहंसौ, तावज्जीयादजस्रं कृतियतिभिरिदं पुस्तकं वाच्यमानम् ॥ ८ ॥

## [ ६९ ]

## ऊकेशवंशीय-श्रे० हरिपाल-लेखित-कल्पसूत्र-कालिकाचार्यकथानक-पुस्तिकाप्रशस्तिः* ।

[ लेखनकाल सं० १३३५ विक्रमाब्द ]

—इति श्रीकालिकाचार्यकथानकं समाप्तम् ।

... ... ... ...

**सं० १३३५ वर्षे आषाढशुदि**···**गुरौ प्रह्लादनपुरे** लिखितः ।

**ऊकेशान्वय**शाखिनि स्फुरदुरुच्छायानपायश्रिया **शौराणी**ति फलाभिलाषिभिरलं······माश्रिता विश्रुता ।
एतस्यामभवद् भवस्थितिहृति श्रीजैनपादाम्बुजे भृंग·································[॥ १ ॥†

× × × ×

·························सुतो **महणसिंहो**ऽस्ति तयोः सुगुरुभक्तिमान् ॥ ११ ॥
**स्थिरदेवा**भिधानेन षष्ठो **गुणधराङ्ग**भूः । **देपाल**प्रमुखाः पुत्रास्तस्य **थेही**समुद्भवाः ॥ १२ ॥
सप्तमो **हर्षदेवो**ऽस्ति **हर्षदेवी**ह हर्षदा । तस्य पत्नी ततः पुत्रा **नरसिंहा**दयो यथा ॥ १३ ॥
**धांधू**नामाऽभवद् भ्राता कनीयान् **गुणधरस्य** च । **षेढा**भिधानस्तत्पुत्रः पवित्रो धर्मकर्मणा ॥ १४ ॥
इमा दुहितरस्तिस्रो जाता **गुणधरस्य** च । **कर्मिणिः** प्रथमा तत्र **लखिमणि हरिसिणि**स्तथा ॥ १५ ॥

अथ गुरुक्रमः—

वादिचन्द्र-**गुणचन्द्र**विजेता **विग्रह**क्षितिपबोधविधाता ।
**धर्मसूरि**रिति नाम पुराऽऽसीत् विश्वविश्वविदितो मुनिराजः ॥ १६ ॥
**आनन्दसूरि**शिष्यश्री**अमरप्रभसूरि**देशनां श्रुत्वा ।
**हरिपाला**भिधपुत्रः **कुलचन्द्र**स्येति चिंतितवान् ॥ १७ ॥

चपलाऽचपला लक्ष्मीः स्थिरस्थाननियोगतः । मतिमन्तः प्रकुर्वन्ति गुर्वन्तिकमुपागताः ॥ १८ ॥
इयं **पर्युषणाकल्प**पुस्तिका स्वस्तिकारिणी । लिखिता **हरिपालेन** स्वमातृश्रेयसे ततः ॥ १९ ॥
प्रतिवर्षं गुरुहर्षं संघेन श्रूयमाणशब्दार्था । मुनिवृन्दवाच्यमाना नंदतु वरपुस्तिकाऽन्तर्गता ॥ २० ॥

## [ ७० ]

## पल्लीवालवंशीय-श्रा० सूल्हणि-लेखित-उपमितिभवप्रपञ्चाकथासारोद्धार-पुस्तकप्रशस्तिः‡ ।

[ लेखनकालो नोल्लिखितः; अनुमानेन १३ शताब्दी ज्ञायते ]

श्रीमन्तस्ते सतां सन्तु तीर्थेशाः स्वस्तिकारणं । अपारभवकान्तारसमुत्तारितजंतवः ॥ १ ॥

---

* पत्तने संघवीपाडास्तकभाण्डागारे विद्यते इयं पुस्तिका ।

† अग्रेतनस्य पत्रस्य नष्टत्वात् खण्डिताऽत्रेयं प्रशस्तिः ।

‡ पुस्तिकेयं पत्तने संघवीपाटकस्थितज्ञानभाण्डागारे विद्यते ।

**पल्लीवाल** इति ख्यातो वंशः पर्वोदितोदितः। सोऽस्ति स्वस्तिकरो धात्र्यां यस्य कीर्तिर्ध्वजायते ॥ २ ॥
पुरा तत्र पवित्रोऽभूद् वंशे मुक्ताफलोज्ज्वलः। **वीकला**ख्य इति श्रेष्ठी सतां हृदि गुणैः स्थितः ॥ ३ ॥
तत्पत्नी **रत्नदेवी**ति पवित्रा पुण्यशालिनी। गुणमाणिक्यमंजूषा तुषारद्युतिशीतला ॥ ४ ॥
पुत्री तयोः **सूल्हणि**नामधेया सुश्राविका शीलवती बभूव।
या देवपूजानिरता गुरूणां पादाम्बुजा सेवनराजहंसी ॥ ५ ॥
पुरा पवित्रस्तत्रासीद् वंशे मुक्ताफलोज्ज्वलः। **योगदेव** इति श्रेष्ठी सतां हृदि गुणैः स्थितः ॥ ६ ॥
**आमदेवश्च वीरश्च** तनयौ सनयौ ततः। **कपर्द्दा-माक-साढाका वीर**पुत्रास्त्रयोऽभवन् ॥ ७ ॥
**साढाक**स्य ततो जज्ञे पुत्रश्चा**म्रकुमार**कः। परोपकारदाक्षिण्यगाम्भीर्यविधिसेवधिः ॥ ८ ॥
**जयन्ती**त्याख्यया जज्ञे गेहिनी तस्य सत्यवाक्। तत्सुतः **पासडो** जज्ञे **धांइ रूपी** सुते तथा ॥ ९ ॥
ततः सत्पुण्यपात्रस्य पवित्रस्य महात्मनः। सुधियः **पासड**स्याभूत् पत्नी **पातू**रिति प्रिया ॥ १० ॥
तस्याः पुत्रास्त्रयो जाताः पुमर्था इव जंगमाः। **जगत्सिंहो वज्रसिंह**स्तथा **मदनसिंह**कः ॥ ११ ॥
**माल्हणिर्जगत्सिंह**स्याभवत् सद्धर्मचारिणी। **सूल्हणिर्वज्रसिंह**स्य बभूव प्रेयसी ततः ॥ १२ ॥
श्रीपूज्योदयचन्द्राख्यपट्टस्योद्द्योतकारिणाम्। श्री**देवसूरी**णां[ सम्यगुप ]देशेन भक्तिभाक् ॥ १३ ॥
**सूल्हणि**श्राविका सेयं कुर्वाणा धर्मसंग्रहं। श्री**जयदेव**सूरीणां विशेषाद् भक्तिशालिनी ॥ १४ ॥
**उपमितिभवप्रपंचस्योद्धार**स्यात्र पुस्तिकामेताम्। सा **पातूः** स्वश्वश्रूश्रेयोऽर्थं लेखयामास ॥ १५ ॥
यावदुदयाद्रिवेद्यां दिवसकरो भानुपावकसमक्षं। परिणयति दिकुमारीर्नन्दतु सत्पुस्तकस्तावत् ॥ १६ ॥
शुभमस्तु श्रीश्रमणसंघस्य मंगलं महाश्रीरिति ॥

# [ ७१ ]

## ऊकेशवंशीय-श्रे० देवसिंह-लेखित-जीवाभिगमाध्ययनटीका-पुस्तकप्रशस्तिः*।

[ लेखनकाल सं० १४४४ विक्रमाब्द ]

**ऊकेशो भद्रेश्वर**गोत्रे **नारायणीय**शाखायाम्। वृद्धो वणिगिति विदितो **नरसिंहः** साधुवर आसीत् ॥ १ ॥
तस्य च भार्या**मोती**तनूद्भवाः सप्त **सांगणः** प्रथमः। **छीता-लाखा-देदा-तिहुणा-रामाक-धाना**ख्याः ॥२॥
**सांगण**वधूर्धन**श्रीः** पुत्रौ द्वावेव तयोश्च **नरदेवः**। **जगसिंह**श्च लघुवधूर्**जयतसिरी**रंगजास्त्रयश्चामी ॥ ३ ॥
आद्यौ हि **गोना-वइजा**भिधानौ तृतीयबन्धुः किल **देवसिंहः**।
यो देवगुर्वादिकधर्मकार्ये कृताभियोगः शुभभाग्ययोगः ॥ ४ ॥
**वइजा**कस्य तु भार्या **जयश्री**रंगजाश्चतुःसंख्याः। साधुवर**नागसिंह-श्छाजल-नरवर्म-दूदा**ख्याः ॥ ५ ॥
साधोश्च **देवसिंह**स्य भार्या **कर्मसिरि**रिति। त्रयाणां पुरुषार्थानां पात्रमास्ते कुलं ह्रदः ॥ ६ ॥
श्रीमत्**तपागण**नभोऽङ्गणभास्कराणां श्री**देवसुन्दर** गुरूत्तमसूरिराजाम्।
धर्मोपदेशवशतोऽवगताप्तवाक्यः स्वोपार्जितार्थनिवहस्य फलं जिघृक्षुः ॥ ७ ॥
सुधीः सहस्रानिह **देवसिंहो** ग्रन्थाग्रतः पञ्चदशप्रमाणान्। श्रीताडपत्रेषु जिनागमस्यालेखयत् संप्रति पुस्तकेऽत्र ॥ ८ ॥
**सिद्धप्राभृत-जीवाजीवाभिगम**वृत्तिकेऽलेखयत्।
**अणहिलपाटकनगरे त्रि-वार्द्धि-वार्द्धीन्दु**-मितवर्षे ॥ ९ ॥

---

* सिद्धपाहुड-जीवाभिगमाध्ययनग्रन्थद्वयात्मकं पुस्तकमिदं पत्तने संघवीपाडासत्कभाण्डागारे विद्यमानमस्ति।

[पुस्तकेऽत्र लिपिकर्त्रा त्रिषु स्थानेषु लेखनसमाप्तिसमयो निर्दिष्टः । तत्र-

(१) सिद्धप्राभृतटीकाप्रान्ते इत्थमुल्लिखितम्-

"संवत् १४४४ वर्षे फागुण शुदि ५ बुधे अद्येह श्रीपत्तने । मंगलं महाश्रीः । शिवमस्तु । त्रिपाठि नागशर्मेण (०र्मणा ?) लिखितं ॥"

(२) सिद्धपाहुडमूलग्रन्थप्रान्तभागे-

"मंगलं महाश्रीः । संवत् १४४४ वर्षे फागुणशुदि ६ गुरौ त्रिपाठि नागशर्मेण (०र्मणा ?) लिखितम् ॥"

(३) जीवाभिगमटीकाप्रान्ते-

"समाप्ता जीवाभिगमाध्ययनशास्त्रप्रदेशटीका कृतिर्हरिभद्राचार्यस्येति ॥ छ ॥ ग्रंथाग्रं० १२०० ॥ छ ॥ संवत् १४४४ वर्षे फागुणशुदि १५ शनौ अद्येह श्रीपत्तने ॥"

# [ ७२ ]

## श्रीमालवंशीय-श्रे० सामंत-लेखित-त्रिषष्टिशलाकापुरुषचरित्र [ तदन्तर्गत-नेमिचरित ] पुस्तकप्रशस्तिः* ।

[ लेखनकाल सं० १३७५ विक्रमाब्द ]

श्रीमालवंशे प्रागासीद् देहडिर्देहिनां वरः । पुण्यपाल-देवपालौ सुतौ तस्य बभूवतुः ॥ १ ॥
यशो नामा पुण्यपालतनयस्तस्य सूनवः । सांताकः सिंधुलश्चैव ऊदलः सांग एव च ॥ २ ॥
त्रयः सांताकतनया आंबडः शूर एव च । सलक्षो लब्धलक्षोऽभूत् सर्वभूतदयापरः ॥ ३ ॥
सिंधुलधर्मपत्न्यासीत् सूहवदेवी नामतः । सुतः सामन्तनामाऽभूत् यस्तत्त्वज्ञशिरोमणिः ॥ ४ ॥
अंगजौ ऊदलस्यापि आभड आसकस्तथा । त्रयः सांगाकसुता वीसलो वयजा-देदकौ ॥ ५ ॥
चाहडो देपालसुतः सीहडश्चाहडांगजः । त्रयः सीहडतनयाः सांगणः सुकृतांगणः ॥ ६ ॥
सहजपालः सज्जनः सांगणांगरुहाः क्रमात् । शूराकः प्राह्लादश्चैव श्यामलः सालिगस्तथा ॥७॥
श्रीमान् विवेकसिंहाख्यः पूर्णिमापक्षमंडनं । तत्पट्टे श्रीरामचंद्रप्रभुः सप्रतिमोऽभवत् ॥ ८ ॥
तत्पट्टमंडनं श्रीमान् धीरसिंहाभिधः प्रभुः । तच्छिष्योऽभयसिंहाख्यगुरुर्भविकसम्मतः ॥ ९ ॥
तस्मै श्रीगुरवेऽदत्त पित्रोः श्रेयःकृते सुधीः । सामंतो नेमिचरितं पुस्तकं स्वस्तिकारणम् ॥ १० ॥
काले विक्रमतो बाणै-र्मुनि-र्यक्षमिते सति । रोहेलायां स्थित इदं सामंतः सुकृतं व्यधात् ॥ ११ ॥

---

# [ ७३ ]

## प्राग्वटज्ञातीय-श्रे० जिंदा-लेखित-आवश्यकनिर्युक्ति-पुस्तकप्रशस्तिः† ।

[ लेखनसमय सं० १२१२ विक्रमाब्द ]

संवत् १२१२ मागसिरसुदौ १० रवौ लिखितं उमता व्यास (?) ।

---

* पुस्तकमिदं पत्तने संघवीपाडावस्थितभाण्डागारे विद्यते ।

† पत्तने संघवीपाडावस्थितभाण्डागारे विद्यते पुस्तकमिदम् ।

आसीत् **प्राग्वट**वंशे विमलतरमतिर्विश्वविख्यातकीर्तिः, सद्बुद्धि**र्वाहला**ख्यो जिनपतिचरणाराधने न्यस्तचित्तः।
तस्याभूत् साधुशीला **जिनमति**गृहिणी धर्ममार्गानुरक्ता, या शक्ता **जानकी**व प्रवरगुणगणै **रामदेव**स्य मान्या॥ १॥
जातौ तस्याश्च पुत्रौ विनय-नयपरौ ग्रामणीः श्रावकाणां, एकः सद् **यक्षदेवः** प्रकटगुणगणः.........द्वितीयः।
ज्येष्ठस्याभूत् सुपत्नी जिनवृषकलिता **पोयणी**......, दीनानाथादिदाने वितरणचतुरा क्षांति-दांतिप्रसन्ना॥ २॥
सुता जातास्तस्यास्त्रयनरगुण....................., **यशोदेव**श्चाद्यः प्रथित**गुणदेवा**ख्य इतरः।
तृतीयो **जिन्दा**ख्यो जिनपतिमतभावितमतिः, सुता **जासी**त्याख्या विनयकलिता कर्मनिरता॥ ३॥
...............मात्रा निजश्रेयसे संशुद्धं भणितेन पुस्तकमिदं **जिंदा**भिधेन स्फुटम्।
श्रेष्ठं लेखितमागमस्य विबुधैर्द्वेधा सुमान्यं सदा, नानावर्णसुपत्र..........रत्नाकरम्॥ ४॥
यावत्तारकनायकौ दिनकरौ देवाचलस्तोयधिर्यावज्जैनमतं वरं सुरनदी स्वर्गो दिशां मंडलम्।
यावच्छेषफणावलीषु जगती............ तावन्नंदतु पुस्तकं प्रतिदिनं पापठ्यमानं बुधैः॥ ५॥

# [ ७४ ]

## प्राग्वाटवंशीय-श्रा० वरसिंह-लेखित-हैमव्याकरणावचूरि-पुस्तकप्रशस्तिः* ।

[ लेखनकालो नोल्लिखितः ]

श्रीवीतरागं प्रणिपत्य भक्त्या हैमावचूरेः शुभपुस्तिकायाः। .......................प्रशस्ति॥ १॥
**प्राग्वाटवंशो**ज्ज्वलमौक्तिकाभः सुश्रावकः **पूनड**नामधेयः। निशम्य शास्त्राणि भुवि द्विधापि.....प्राप परीक्षकत्वं॥ २॥
क्षेत्रेषु सप्तस्वथ दुःस्थितेषु न्यायात्तवित्तं वितरन्नजस्रं। अचिंत्यदानादि.................यशांसि लोके॥ ३॥
तद्गेहिनी श्रीरिव देहिनीह **तेजी**ति नामास्ति जिनेन्द्रभक्ता। विनीत.....................गुणावदाता॥ ४॥
तत्सूनुरन्यूनगुणः प्रधानो जिनेश्वरध्यानकृतावधानः। दोर्दंड.....मांडलिक.............**लिषा**भिधानः॥ ५॥
यदीयबंधु**र्वरसिंह**संज्ञः श्रीसार्वगुर्वर्चनकृत्यविज्ञः। हैमावचूरिर्दशपद......................लेखितमत्र तेन॥ ६॥

# [ ७५ ]

## प्राग्वाटवंशीय-श्रा० सरणी-लेखित-सटीकउत्तराध्ययनसूत्र-पुस्तिकाप्रशस्तिः† ।

[ लेखनकाल सं० १४०० (?) विक्रमाब्द ]

॥ नमः सर्वज्ञाय॥

सन्मर्यादो गभीरो घनरसनिचितः साधुपाठीनहेतु-र्नित्यं लक्ष्म्या निवासः कुलधरनिलयः सद्वसुस्थानमुच्चैः।
कुल्याधारो गरीयान् प्रचुरतरलसत्कोटिपात्रोपशोभी, वंशः **प्राग्वाट**पुंसां क्षितितलविदितो वर्तते सिंधुकल्पः॥ १॥
तत्राभवद् देवगजोपमानः सलीलगामी बहुदानवर्षः। यो नामतः ख्यातिमितोऽर्थतश्च जने भृशं **शोभित** इत्युदात्तः॥२॥
पारिग्राहिकतां प्राप्तः स्थाने **धान्येरका**ह्वये। प्रजासु राजवर्गे च मान्यो मन्युविवर्जितः॥ ३॥
सुदन्ती दन्तिनीवाभूत् भार्या तस्येह **रुक्मणी**। सलीलगमना कामं सुवंशोन्नतशालिनी॥ ४॥
जातस्तयोस्ततनयास्तनया विनयान्विताः। जनितानेकलोकार्थाः पुरुषार्था इव त्रयः॥ ५॥

---

* पत्तने संघवीपाडावस्थितभाण्डागारे विद्यते पुस्तिकेयम्। प्रभृष्टाक्षरत्वात् खण्डितप्राया इयं प्रशस्तिः।
† पुस्तकमिदं पत्तने संघवीपाडासत्कभांडागारे विद्यमानमस्ति।

तत्राद्यो **वीरचन्द्राख्यो** विख्यातो निर्मलैर्गुणैः । कृतगुरुदेवसेवो **वीरदेवा**भिधोऽपरः ॥ ६ ॥
तृतीयः **पूर्णपालः** श्रीश्रेयसां भाजनं परम् । यथाक्रममथामीषां भार्याः सच्चर्ययान्विताः ।
**राजिनी**प्रमुखाः सख्यं यासां साध्वीभिरायतम् ॥ ७ ॥
पंचाथ पुत्रिका जाताः सुपवित्राश्च······· । पित्रोर्विनयकारिण्यो वरेण्यगुणराजिताः ॥ ८ ॥
तत्रादिमा बान्धवलोकमान्या पैशून्यशून्यादितमन्युदैन्या ।
नाम्ना प्रतीता **सरणी**ति धन्या यशोवदाता सुतरां वदान्या ॥ ९ ॥
प्रियवाक्यप्रयोगेन प्रीणिताखिलदेहिनः । **पासड**वणिजः पत्नी श्रावकस्य विवेकिनः ॥ १० ॥
द्वितीया **मरुदेवी**ति गणिनी गुणशालिनी । ज्ञानदर्शनचारित्र[ रत्नत्र ]यविभूषिता ॥ ११ ॥
तृतीया श्रितसंतोषा **संतोषे**ति सुविश्रुता । **यशोमति**रिति ख्याता तुर्या बहुयशोमतिः ॥ १२ ॥
**विनयश्री**रिति ख्याता गणिनी पंचमे जने । **मरुदेवी**गणिन्यास्तु सदान्तेवासिनी परा ॥ १३ ॥
यन्नैर्मल्यं निभाल्यैवानन्यतुल्यं निशाकरः । लज्जितोंकच्छलेनान्तःकालुष्यं बिभ्रते भृशम् ॥ १४ ॥
अथान्यदा वाचमुवाच·······**सरणी** गुरूणाम् । यथा महार्था जिनभाषिता गीराराध्यमाना विनिहन्ति मोहं ॥ १५ ॥
निशम्य चैवं संजातबुद्धिर्जिनवरागमम् । लेखयितुं सुतं पृष्ट्वा **विमलचन्द्र**नामकम् ॥ १६ ॥
द्वितीयं च **देवचन्द्रं** च धर्मसम्बद्धचेतसम् । तृतीयं च **यशश्चन्द्रं** सुकृतन्यक्कृतांहसम् ॥ १७ ॥
तैरेव कृतसाहाय्या धनदानेन भूयसा । भगिनीभिश्च **संतोषा**प्रमुखाभिः स्वेच्छया ॥ १८ ॥
पुस्तकमेतदलीलिखदिहो**त्तराध्ययनटीका**याः । प्रांजलपंक्तिविशिष्टं विविक्तरेखाक्षरशोभम् ॥ १९ ॥
सूर्याचन्द्रमसौ यावद् यावद्द्वीपाः ससिंधवः । पठ्यमानो बुधैस्तावन्नंदत्वेष सुपुस्तकः ॥ २० ॥

# [ ७६ ]

## श्रीमालवंशीय-श्रा० धर्मिणि-लेखित-चन्द्रप्रज्ञप्तिवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकाल सं० १४८१–८३ विक्रमाब्द ]

–इति श्री **मलयगिरि**विरचिता **चन्द्रप्रज्ञप्तिटीका** समाप्ता । मंगलं महाश्रीः । शुभं भवतु श्रीचतुर्विध-संघस्य । ग्रंथाग्रं० ९५०० ॥ **संवत् १४ आषाढादि ८१ वर्षे भाद्रपदवदि १ शनौ ।**
श्री**श्रीमालकुले तेजा** मंत्री **वानूश्च** तत्प्रिया । आसंस्तत्तनया **मेला-मेघा-सेगा**ह्वयस्त्रयः ॥ १ ॥
तेषां **डाही-धर्मिणि-कांऊ** नाम्न्यः क्रमादिमाः पत्न्यः । **मेला**पुत्रा **गोरा-सांईआ-रामदेव-चांगा**ख्याः ॥ २ ॥
इतश्च **मेघा**दयिता **धर्मिणि**र्धर्मकर्मठा । **घोघानगर**वास्तव्यमंत्री**सिंघा**तनूद्भवा ॥ ३ ॥
**कडुआ-धांगा**बंधुप्रभृतिकुटुंबान्विता सुधर्मरता । श्रीमज्जैनेंद्रागमभक्तिभरोल्लसितचेतस्का ॥ ४ ॥
तपाधिपश्रीगुरु**सोमसुन्दरो**पदेशतस्त्र्य**ष्टदिगिंदु**( १४८३ ) वत्सरे ।
अलीलिखत् स्वस्य हिताय **चन्द्रप्रज्ञप्तिवृत्तिं** वरताडपुस्तके ॥ ५ ॥

---

* पुस्तकमिदं पत्तने संघवीपाडावस्थितज्ञानभाण्डागारे विद्यते ।

# [ ७७ ]

## श्रीमालवंशीय-श्रे० कर्मण-लेखित-[ तिलकाचार्यकृत ] आवश्यकलघुवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनकाल सं० १४९२ विक्रमाब्द ]

**अणहिलपुरम**स्ति स्वस्तिकप्रायमूर्व्यां, नयविनयविवेकच्छेकलोकावरुद्धम् ।
अपरनगरशोभागर्वसर्वस्वजैत्रं, वरजिनगृहमालास्वर्विमानोपहासि ॥ १ ॥
श्रीश्रीमालकुलस्तत्र **रावा**ख्यः श्रेष्ठिपोऽभवत् । नानादानादिसद्धर्मकर्म्मकर्म्मठमानसः ॥ २ ॥
तस्य **राजलदेवी**ति जायाऽजायत सद्गुणा । विवेकविनयप्रह्वा शीलालंकारधारिणी ॥ ३ ॥
**सांडा-सोमा-मेघा-भूपति-पांचा**ह्वयास्तयोः पंच । पुत्राः सुतीर्थयात्राद्यवाप्तसंघाधिपत्यपदाः ॥ ४ ॥
नामस्तवपंचशतीकायोत्सर्गैकतत्परः सततम् । **सांडा**ख्यः संघपतिर्विशिष्य तेष्वद्भुतक्रियो जज्ञे ॥ ५ ॥
तेषां **सांडा**दीनां पंचानामपि च पंच पत्न्योऽमूः । **कामलदेवी सिंगारदे**श्च **माणिक्यदेवी** च ॥६॥
**भावलदेवी पाल्हणदेवी** ख्याताः सुशीलतः क्रमतः । श्रीदेवगुरुषु भक्ताः सक्ताः सद्धर्मकर्मविधौ ॥ ७ ॥–युग्मं ।
**सांडा-कामलदेव्यो**स्तनयाः पंचाऽभवन् क्रमादेते । श्रीधर्म्मकर्म्मकुशलाः सम्यक्त्वाद्यैर्गुणैः प्रथिताः ॥ ८ ॥
**मना**ख्यः प्रथमस्तेषां **धर्मणः कर्मण**स्तथा । **डाहा**ख्यश्च चतुर्थोऽस्ति **योधा**ख्यः पंचमः पुनः ॥ ९ ॥
पुत्र्यौ तथा द्वे गुणराजिराजिते **पूरी**ति **वाधू**रिति विश्रुताभिधे ।
यन्मानसं श्रीदेवगुरुभक्तियुक् श्रीधर्मपीयूषरसेन पूरितम् ॥ १० ॥
दयिताः क्रमतस्तेषां विमलान्वयविनयशीलसंपन्नाः । **रतनू कांऊं मांई मांकू वाल्ही**ति नामानः ॥ ११ ॥
**मनाकस्य समधरः सालिग**श्च सुतावुभौ । **धर्मण**स्य संघपते**र्हर्षा-वाला**-भिधौ पुनः ॥ १२ ॥
**डाहाक**स्य **मांई** आद्या **हंसो योधां**गजस्तथा । सर्वेऽप्यमी गुणमणिश्रेणिरोहणभूधराः ॥ १३ ॥
नानाविधान् धर्मविधीन् सृजन् सदा विशुद्धधीः संघपतिस्तु **कर्म्मणः** ।
श्रीज्ञानभक्तिं विशदां हृदा दधद् द्रव्यव्ययेन प्रचुरेण हर्षतः ॥ १४ ॥
**ष्ठि-साल्हाक-सिंगारदेवी**पुत्र्या पवित्रया । **मांई**नाम्न्याऽनिशं शुद्धक्रियया प्रिययान्वितः ॥ १५ ॥
श्री**सोमसुन्दरगुरु**प्रवरोपदेशात् स्वश्रेयसे **द्विनवं-वार्द्धि-शशांक**वर्षे ।
**आवश्यकस्य लघुवृत्ति**मलेखयत् श्रीताडीयपुस्तकवरे दृढधर्मभावः ॥ १६ ॥
पुस्तकेष्वपरेष्वन्ये ग्रन्थास्तेनाथ लेखिताः । अयं च वाच्यमानास्ते जीयासुर्विबुधैश्चिरम् ॥ १७ ॥
॥ श्री**सोमसुन्दरसूरि**गुरवो जयंतु । श्रीः । छ ॥ ठ० वैकुंठ ठ० कुंठा ॥

# [ ७८ ]

## प्राग्वाटवंशीय-श्रा० स्याणी-लेखित-आचारांगसूत्र-वृत्ति-पुस्तकप्रशस्तिः† ।

[ लेखनकाल सं० १४५० विक्रमाब्द ]

**॥ संवत् १४५० वर्षे भाद्रपद वदि १ शुक्रे** रेवत्यां पुस्तकं लिखितम् ।

---

* पुस्तकमिदं पत्तने संघवीपाडासत्कज्ञानभाण्डागारे विद्यते ।

† पुस्तकमिदं पत्तने संघवीपाडासत्कभांडागारे विद्यमानमस्ति ।

सद्धर्म्मव्यवहारि**देसल**सुतः ख्यातः क्षितौ सर्वतः, **प्राग्वाटा**न्वयमंडनं समभवन्**मेघा**ख्यसंघाधिपः ।
जाया **मीणलदेवी** नाम विदिता तस्य प्रशस्याशया, पुत्री पुण्यवती तयोर्गुणवती **स्याणी**ति संज्ञाऽभवत् ॥ १ ॥
सम्यग्दृग् **नरसिंह गान्धिक**सुतः श्रद्धालुवर्गाग्रणीः, जज्ञे **गागलदे**वि**सूर्धणिगा**ह्वानः प्रधानः सदा ।
जाया याऽजनि तस्य शस्यचरिता पुण्यक्रियाप्रत्यला, नित्यं श्रीजिनपूजनैकरसिका दानादिबद्धादरा ॥ २ ॥
श्रुत्वा श्री**गुरुदेवसुन्दर**महाधर्मोपदेशं तया, वर्षे **विक्रम**तो **नभः-शर-नदीनाथेन्दु**संख्ये स्वकम् ।
द्रव्यं भूरि वितीर्य पुस्तकमिदं सुश्रेयसे लेखितं, नित्यं नंदतु वाच्यमानमनघैर्मेधाविभिः साधुभिः ॥ ३ ॥

॥ शिवमस्तु श्रीः ॥

# [ ७९ ]

## माथुरान्वयजात-संयतिका जाहिणी-लिखापित-ज्ञानार्णव-पुस्तकप्रशस्तिः* ।

[ लेखन संवत् १२८४ विक्रमीय ]

–इति **ज्ञानार्णवे** योगप्रदीपाधिकारे पंडिताचार्य श्री**शुभचन्द्र**विरचिते मोक्षप्रकरणम् ।

अस्यां श्री**मन्त्रपुर्यां** श्रीमदर्हद्देवचरणकमलचंचरीकः सुजनजनहृदयपरमानन्दकंदलीकंदः श्री**माथुरान्वय**-समुद्रचंद्रायमानो भव्यात्मा परमश्रावकः **श्रीनेमिचन्द्रो** नामाऽभूत् । तस्याखिलविज्ञानकलाकौशलशालिनी सती पतिव्रतादिगुणगणालंकारभूषितशरीरा निजमनोवृत्तिरिवाव्यभिचारिणी **स्वर्णा** नाम धर्मपत्नी संजाता । अथ तयोः समासादितधर्मार्थकामफलयोः स्वकुलकुमुदवनचंद्रलेखा निजवंशवैजयंती सर्वलक्षणालंकृतशरीरा **जाहिणी** नाम पुत्रिका समुत्पन्ना ॥ छ ॥

ततो **गोकर्ण-श्रीचन्द्रौ** सुतौ जातौ मनोरमौ । गुणरत्नाकरौ भव्यौ राम-लक्ष्मणसन्निभौ ॥
सा पुत्री **नेमिचन्द्र**स्य जिनशासनवत्सला । विवेकविनयोपेता सम्यग्दर्शनलांछिता ॥
ज्ञात्वा संसारवैचित्र्यं फल्गुतां च नृजन्मनः । तपसे निरगाद् गेहाद् शांतचित्ता सुसंयता ॥
बांधवैर्वार्यमाणापि प्रणतैः शास्त्रलोचनैः । मनागपि मनो यस्या न प्रेम्णा कश्मलीकृतं ॥
गृहीतं मुनिपादान्ते तया संयतिकाव्रतं । स्वीकृतं च मनःशुद्ध्या रत्नत्रयमखंडितं ॥
तया विरक्तयाऽत्यंतं नवे वयसि यौवने । आरब्धं तत् तपः कर्तुं यत् सतां साध्विति स्तुतं ॥
यम-व्रत-तपोयोगैः स्वाध्याय-ध्यान-संयमैः । कायक्लेशाद्यनुष्ठानैर्गृहीतं जन्मनः फलं ॥
तपोभिर्दुष्करैर्नित्यं वाह्यान्तर्भेदलक्षणैः । कषायरिपुभिः सार्द्धं निःशेषं शोषितं वपुः ॥
विनयाचारसंपत्त्या संघः सर्वोप्युपासितः । वैयावृत्त्योद्यमात् शश्वत् कीर्तिर्नीता दिगन्तरे ॥
किमियं भारती देवी किमियं शासनदेवता । दृष्टपूर्वैरपि प्रायः पौरैरिति वितर्क्यते ॥
तया कर्मक्षयस्यार्थं ध्यानाध्ययनशालिने । तपःश्रुतनिधानाय तत्त्वज्ञाय महात्मने ॥
रागादिरिपुमल्लाय **शुभचंद्राय** योगिने । लिखाप्य पुस्तकं दत्तमिदं **ज्ञानार्णवा**भिधम् ॥

**संवत् १२८४ वर्षे वैशाष शुदि १० शुक्रे गोमंडले दिगम्बर**राजकुल**सहस्रकीर्त्ति**स्या(?)र्थे पं० **केशरिसुतवीसलेन** लिखितमिति ॥

---

* पुस्तकमिदं पत्तने खेतरवसहीपाटकावस्थितज्ञानकोशे विद्यते ।

# [ ८० ]

## प्राग्वाटवंशीय-श्रे० यशोदेव-लेखित-सिद्धान्तविचार-पुस्तिकाप्रशस्तिः* ।

[ लेखनसमय सं० १२१२ विक्रमाब्द ]

**संवत् १२१२ आषाढ वदि १२ गुरौ** । लिखितेयं सिद्धान्तोद्धारपुस्तिका लेखकं**देवप्रसादे**नेति । ग्रंथाग्रं० १६३० द्वितीयखंडे ॥ छ ॥

शिष्यांभोजवनप्रबोधनरवेः श्री**धर्मघोष**प्रभो-र्वक्त्रांभोजविनिर्गताः [ सुविशदाः ] सिद्धांतसत्का अमी ।
पर्याया **गणिचंद्रकीर्ति**[मुनि]ना संचिंत्य संपिंडिताः, स्वस्य श्री**विमला**ख्यसूरिगणभृच्छिष्येण चिंताकृते ॥ १ ॥
अस्ति श्रीमदखर्वपर्वततिभिः सर्वोदयः क्ष्मातले, छायाछन्नदिगंतरः परिलसत् भव्यावलीसंकुलः ।
सेवाकारिनृणां नवीनफलदोऽप्यश्रांतसांद्रद्युति-र्निश्छिद्रः सरलत्वकेतुनिकरः **प्राग्वाटवंशः** सतां ॥ २ ॥
मौक्तिकहारसंकाशः समासीत्तत्र **नीहिलः** । श्रावको गुणसंयोगान्नराणां हृदये स्थितः ॥ ३ ॥
समजनि **धनदेवः** श्रावकस्तस्य सूनुः, प्रथितगुणसमुद्रोऽमंदवाणी विशेषात् ।
गगनवलयरंगत्कीर्तिचंद्रोदयेऽस्मिन्, लगति न··················· ॥ ४ ॥
तस्य च **भार्येन्दुमती**·········पुत्रः **गुणरत्नो**·········रोहणाचलः धर्मवनद्रुममलयः ।
······························कीर्तिसुधाधवलितसमस्तविश्ववलयो **यशोदेव**श्रेष्ठी ॥ ५ ॥
तस्य च – **अंबी**ति नाम्ना जनवत्सलाऽभूद् भार्या **यशोदेव**गृहाधिपस्य ।
यस्याः सतीनां गुणवर्णनायामाद्यैव रेखा क्रियते मुनीन्द्रैः ॥ ६ ॥
तयोश्च पुत्रा **उधरण-आम्बिग-वीरदेवा**ख्या बभूवुः ।
**सोली-लोली-सोखी**नामानश्च पुत्रिकाः संजज्ञिरे ॥ ७ ॥
अन्यदा च – सिद्धांतलेखनबद्धादरेण जिनशासनानुरंजितचित्तेन ।
**यशोदेव**श्रावकेण सिद्धांतविचारपर्यायपुस्तिका लेखयामास (?) ॥ ८ ॥
पूज्यश्री**विमला**ख्यसूरिगणभृच्छिष्यस्य चारित्रिणो, योग्याऽसौ गणि**चंद्रकीर्ति**विदुषो विद्वज्जनानंदिनी ।
शास्त्रार्थस्मृतिहेतवे परिलसद् ज्ञानप्रपा पुस्तिका, भक्तिमांचितय(?)त्युपासक**यशोदेवे**न निर्मापिता ॥ ९ ॥
यावच्चंद्ररवी नभस्तलजुषौ यावच्च देवाचलो, यावत्सप्तसमुद्रमुद्रितमही यावन्नभोमंडलं ।
यावत्स्वर्गविमानसंततिरियं यावच्च दिग्दंतिन-स्तावत्पुस्तकमेतदस्तु सुधियां व्याख्यायमानं मुदे ॥ १० ॥

॥ इति प्रशस्तिः ॥ समाप्त ॥ छ ॥

# [ ८१ ]

## प्राग्वाटवंशीय-श्रे० धीनाक-लेखित-उत्तराध्ययनलघुवृत्ति-पुस्तकप्रशस्तिः† ।

[ लेखनसमय सं० १२९६ विक्रमाब्द ]

**–संवत् १२९६ चैत्र वदि १० सोमे ।**

---

* एतत्प्रशस्तियुक्ता पुस्तिका स्तम्भतीर्थे शांतिनाथमन्दिरावस्थितज्ञानकोशे विद्यते ।

† पुस्तकमिदं स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितभांडागारे विद्यते ।

बभूव भूतल..............**प्राग्वाट**वंशजः। शिष्टाचाररतः श्रेष्ठी **धीनाको** नाम संमतः ॥ १ ॥

तत्कलत्रं तु **पद्मश्रीः** रामश्रीरिव केवला। अभवत् **पासचंद्रा**ख्यस्तयोः सूनुः सुधार्मिकः ॥ २ ॥

पौत्रस्तु **गुणपाला**ख्यो **धीनाकः** श्रेष्ठ्यथान्यदा। श्री**देवेंद्र**मुनींद्रस्य देशनामश्रृणोदिति ॥ ३ ॥

ज्ञानाभयोपग्रहदानभेदाद् दानं त्रिधा सर्वविदो वदन्ति। तत्रापि तीर्थात्रुटिकारणेन सुज्ञानदानं प्रवरं वदन्ति ॥ ४ ॥

कालादिदोषान्मतिमांद्यतश्च तन्नो भवेत् पुस्तकमंतरेण। चलश्रिया शाश्वतसौख्यकारि तल्लेखनं युक्तमतः सतां हि ॥ ५ ॥

श्रुत्वेति श्रेष्ठी **धीनाकः** स्वश्रेयोऽर्थमलेखयत्। पुण्यं श्री**उत्तराध्याय**लघुसद्वृत्तिपुस्तकं ॥ ६ ॥

यावद्......................................वाच्यमानं विदुषां समूहैः ॥ ७ ॥

# [ ८२ ]

## धर्कटवंशीय-श्रा० रत्नश्री-लेखित-पर्युषणाकल्प-पुस्तिकाप्रशस्तिः* ।

[ लेखनसमय सं० १३०० विक्रमाब्द ]

**संवत् १३०० वर्षे कार्तिक वदि १३ शनौ** पर्युषणाकल्पपुस्तिका लिखिता ॥ छ ॥ छ ॥

सूरिः श्रीगणनायकोऽजनि **यशोभद्रा**भिधेयः प्रभुः, श्री**शाली-सुमती-श्वराश्च** गुरवः श्री**शांतिसूरि**स्ततः। श्रीमानी**श्वर-शालिसूरि-सुमतिः** श्री**शांतिसूरी**श्वराः, श्री**षंडेरगणे क्षमार्षि**सहिताः कुर्वंतु वो मंगलं ॥१॥

अपि च–

यः सद्वृत्तिविनिर्मिताखिलजनप्रीतिप्रकर्षोदयः, प्रोद्भूतोन्नतिभासुरः सरलताशाली सुपर्वव्रजः। धर्माय प्रवरेण भूरिविलसत्संपद्भरेणांचितः, स श्रीमान् जगतीतले विजयतां वंशश्चिरं **धर्कटः** ॥ २ ॥

तस्मिन् वंशे विशाले समजनि सुकृती **सालिगो** नामधेय-स्तस्यासीज्ज्येष्ठपुत्रो गुणगणवसति**रास**पूर्वो **धरश्च**। **आशापाल**स्तदन्यो निजकुलतिलको दानदाक्षिण्यदक्षः, संतोषी शांतचित्तो जिनचरणरतो धर्मकर्मप्रवीणः ॥ ३ ॥

**आसधर**स्य या पत्नी शीलालंकारधारिणी। **आसमती** नाम पुत्रोऽस्याः पूर्वो **माल्हणा**भिधः ॥ ४ ॥

द्वितीयो **जाल्हणो** नाम शुद्धवंशोद्भवः सुधीः। [ सुरद्रुमसमो ]दीने **वूडाक**स्तृतीयकः ॥ ५ ॥

**वूडाक**स्य प्रिया सौम्या **रत्नश्रीः** सत्यशालिनी। दयादाक्षिण्यविभवा सत्यसंतोषशालिनी ॥ ६ ॥

सद्गुरोश्चरणांभोजखंडषट्पदसोदरा। तस्याः पुत्रो बभूवायं **पासडा**ख्यो महामतिः ॥ ७ ॥

**आसपाल**प्रिया जाता **सूहवा**ख्या वरानना। तस्याः सुतः सतां मान्यो **गोसलः** पुण्यमंदिरं ॥ ८ ॥

**गोसल**स्य प्रिया सौम्या **वस्तिनी** शुद्धवंशजा। **जेहका**ख्यः प्रियः पुत्रो **नरसिंहो** द्वितीयकः ॥ ९ ॥

ललना **पासड**स्येयं **धनश्रीः** धर्मकांक्षिणी। **अच्छुतो**ऽस्य अभूत् पुत्रोऽन्यो......**जांजणा**भिधः ॥ १० ॥

**जेहक**स्यांगना जाता **विल्हुका** बंधुबंधुरा। पुत्रस्तस्याः सदा सौम्यः **समता**को कृपानिधिः ॥ ११ ॥

संसारे दुःखरूपे कथमपि च...लभ्यते मानुषत्वं, तस्मिन् धर्मप्रभावे विलसति कमला स्वप्नवच्चंचला सा। **रत्नश्रीः** प्राप्य शुद्धां जिनवचनततिः श्राविकान्येद्यु वित्त-व्याजादाकल्पं...पुनरपि च पटे निश्चलां तां करिष्ये ॥१२॥

..................[ किंचिदपूर्णोऽग्रे ]..................

---

* पुस्तिकेयं स्तम्भतीर्थे शांतिनाथमन्दिरस्थितज्ञानकोशे विद्यते।

# [ ८३ ]

## प्राग्वाटान्वय-श्रे० गुणधर-लेखित-शान्तिनाथचरित्र-पुस्तकप्रशस्तिः* ।

[ लेखनसमय सं० १३३० विक्रमाब्द ]

**–संवत् १३३० वर्षे आषाढ शुदि १० शनौ ।**

॥ ॐ नमः सर्वज्ञाय ॥

स श्रीशान्तिः श्रिये वोऽस्तु योऽपूर्वो मृगलांछनः । अविनाशिरुचिच्छायः सदा द्योतः (?) प्रकाशकः ॥ १ ॥
सश्रीकं जिनमाहवन् (?) लवणिमालीलागृहं रत्नसूः, ·········पूर्णकलामवाप्य मुदितस्तन्वन्नदीनां स्थितिं ।
शश्वद्गोत्रप्रतिष्ठारुचिरसनिलयः साधुवृत्तः समज्जः (?), सत्त्वाधारः समुद्रोपम इह जयति **प्राग्वाट**नामान्वयः ॥ २ ॥
तदन्वयेऽभूद् धनदानुकारी सन्मार्गशाखीव परोपकारी । **धनेश्वरो** धर्मधुरीणदेहस्तस्यांगजोऽभूद् **धनदाक**नामा ॥ ३ ॥
**काशहृदे** वरनगरे **धनदाके**नादिनाथजिनभुवने । मूलप्रतिमाऽभिनवाऽस्थाप्यत शुद्धेन वित्तेन ॥ ४ ॥
श्रेष्ठिनो **धनदाक**स्य **ब्रह्मदेवः** सुतः शुभः । **वाग्भटश्च** सुता चैका **लक्ष्मिणिः** शीलशालिनी ॥ ५ ॥
पुत्रो **गोगाक**नामाऽभूद् **बाहडस्य** गुणश्रियः । **गोगाक-सूमला** पत्नी तयोः पुत्रत्रयं क्रमात् ॥ ६ ॥
**ऊधिग-धांधू-आकड**मुख्या **साल्हु** तथाऽपरा दुहिता । **सौभाग्य-श्रीदेवी**काख्यौ पत्न्यौ शुभाकारे ॥ ७ ॥
भार्याऽभूद् **ब्रह्मदेवस्य मंदोदरी** शुभाशया । तयोः पुत्राश्चतुःसंख्या धर्मकर्मणि कर्मठाः ॥ ८ ॥
**आल्हाकः** सफलः कलंकरहितः स्वच्छाशयो धर्मधीः, **साल्हाको** महिमानिधानमतुलो वाक्येन सन्नंदकः ।
**राल्हाको** गुरुपादपद्मभसलः सर्वज्ञपूजारतः, **माल्हाकः** सबलः सलीलगमनः सत्यव्रतालंकृतः ॥ ९ ॥
**राल्हाक-कुमारदेव्योः** पुत्रत्रितयं तु **ब्रह्मणागाद्याः** । **काल्हूक-रत्नसिंहौ ब्रह्मी-सोहग**-सुते द्वे च ॥ १० ॥
**आल्हाको**ऽर्जितवित्ताद्दाभरणं श्रीयुगादिदेवस्य । आरत्रिकं च मंगलदीपयुतं कारयामास ॥ ११ ॥

**आल्हाक-रत्नदेव्यो** रत्नत्रयधारकास्त्रयः पुत्राः ।
**गुणधर-यशधर-समधर**मुख्याश्चा**हणिः** सुता चैका ॥ १२ ॥
**समधर**भार्या **कर्मणिः** पुत्राः सप्त क्रमेण **कालाद्याः** ।
**आसाऽऽसपाल-सेढा-पूना-हरिचंद्र-वयरा**ख्याः ॥ १३ ॥

**गुणधर**भार्या स्वच्छा शीलतपोदानभावधर्मरता । **राजमति**रंगजातास्तयोर्जनानंदकाः शस्याः ॥ १४ ॥
**पार्श्वभटो वीराक अंबा-लीबाक-सोमदेवाश्च** । **शील्हू-हीरल**-दुहिते जिनधर्मसदोद्यते एते ॥ १५ ॥

**पासड**-भार्या **साजिणि** पुत्रौ द्वौ **विजयसिंह-नयणा**कौ ।
**वीरा**पत्नी **राजश्रीः** सूनुत्रितये तु **जगपालः** ॥ १६ ॥
**हरपाल-देवपालौ; आंबा**भार्या च **ललतुका** श्रेष्ठा ।
**नरपालः** सुतश्चैको; **लीबाक**ल्याण(०भार्या ?)**पमा**ख्या ॥ १७ ॥

**विजयश्री-यशधरयोर्नरसिंह**सूनुरतिथिजनभक्तः । **पाती** दुहिता चैका कुटुंबमेतच्च सुविशालं ॥ १८ ॥
श्री**भुवनरत्न**पूज्याः पारींद्रा वादिकुंजरेण । कांतारनिवृत्तिका गच्छधराः शुभाचाराः (?) ॥ १९ ॥
**आनंदप्रभसूरीं**द्रास्तत्पदांभोजभानवः । सिद्धांतजलधिपारं प्रापुः प्रज्ञाप्रकर्षेण ॥ २० ॥

---

* इदं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरावस्थितज्ञानकोशे विद्यते ।

तत्पट्टे विशुद्धे श्रीमंतो **वीरदेवसूरींद्राः** । तत्पट्टे सच्चरिताः धीमंतः **कनकदेवा**ख्याः ॥ २१ ॥
सम्सुतो **गुणधरः** श्राद्धः पार्श्वे श्री**कनकदेवसूरीणां** । धर्मोपदेशमतुलं शुश्रावेत्थमघापहं [ जातु ] ॥ २२ ॥
गुणानां सर्वेषां जगति जयिनी संपदनिशं, यया दोषाः सर्वे जगति गुणतां यांति गृहिणां ।
नवेद्धाव्याद्गस्या(?) जलधिजलकल्लोलचपला, परेषां सा केषां·········धर्मकार्ये ॥ २३ ॥
जिनबिंब-भवन-पुस्तक-तुर्यविधसंघ-सप्तक्षेत्रेषु । यो वपति बीजवित्तं लभते हि परत्र स बहुफलं ॥ २४ ॥
मुनिक्षेत्रान्तर्विशेषपुण्याय पुस्तकक्षेत्रं·························यत्प्रभावाद् भवंति धर्मोपदेष्टारः ॥ २५ ॥
कलिकालकालविलसिततमसापिहितेन धर्मवररत्ने । श्रुतलिखितपुस्तकमये दीपे तत्प्रकटनं भविनां ॥ २६ ॥
केवलज्ञानपरिस्पर्धि श्रुतज्ञानमुदीरितं । अतस्तल्लेखने पुण्यमगण्यं गदितं जिनैः ॥ २७ ॥

इत्थं श्रुत्वा पुत्रसाहाय्यतोऽसौ श्रेष्ठी न्यायोपात्तवित्तेन हृद्यं ।
**शांते**र्वृत्तं लेखयामास शुद्धं पित्रोः [ श्रेयार्थे ]······॥ २८ ॥

# [ ८४ ]

## गूर्जरवंशीय-श्रा० रयणादेवी-क्रीत-भुवनसुन्दरीकथा-पुस्तकप्रशस्तिः* ।

[ पुस्तकक्रयसमय १३६५ विक्रमाब्द ]

श्रीमद्**गुर्जरवंश**प्रभवः संभवदनेकगुणविभवः । साधु**हरिचंद्र**सूनुः **पुण्यश्री**कुक्षिसंभूतः ॥ १ ॥
दुःस्थार्थिसंतापहरः प्रसिद्धः स्वच्छाशयश्चारुगुणान्वितश्च । मुक्तोपमानो वसुमान् सुवृत्तः समस्ति साधु**र्नयपाल**नामा ॥२॥
तस्यास्ति जाया **रयणा**भिधाना दानादिसद्धर्मरता प्रधाना ।
पुत्रास्त्वमी प्रौढविवेकचर्याः ख्यातास्त्रयो निर्मितसंघकार्याः ॥ ३ ॥
आद्यो वदान्यः कृतिलोकमान्यः प्राज्ञः सुधन्योऽजनि **कीर्तिसिंहः** ।
दानोद्यतोऽन्यस्त्विह **देवसिंहः साल्हा**भिधः साधुवरस्तृतीयः ॥ ४ ॥
साधु**नयपाल**पत्नी **रयणादेवी** विवेकधर्मज्ञा । पुस्तकमेनं श्री**भुवनसुंदरी**सत्कथासत्कं ॥ ५ ॥
आत्मश्रेयोऽर्थमथ व्याख्यापयितुं जनोपकाराय । जगृहे मूल्येन मुदा बाणै-रसै-शिखी-दुं( १३६५ )मितवर्षे ॥ ६ ॥
पुष्पदंताविमौ यावद् वर्तेते गगनांगणे । बुधैर्व्याख्यायमानोऽयं तावन्नंदतु पुस्तकः ॥ ७ ॥
**भुवनसुंदरीकथा**पुस्तकं । सा० **नयपाल**भार्या**रयणा**देव्याः सत्कम् ।

# [ ८५ ]

## श्रीमालवंशीय-श्रा० लीलादेवी-लेखित-आवश्यक-पुस्तकप्रशस्तिः† ।

[ लेखनकाल सं० १३९१ विक्रमाब्द ]

यत्पादद्वितयावनम्रशिरसो भव्यासुमंतोऽनिशं, जायंते सकलार्थसिद्धिसुभगास्त्रैलोक्यलोकोत्तमाः ।
श्रीसिद्धार्थनरेन्द्रवंशविलसद्रत्नत्रयीपोपमः, श्रीमद्वीरजिनेश्वरः स दिशतां नित्यं पदं भाविनां ॥ १ ॥

---

* पुस्तकमिदं स्तंभतीर्थे शांतिनाथमन्दिरस्थितभांडागारे विद्यते ।
† इयं पुस्तिका पत्तने तपागच्छसंज्ञकभाण्डागारे विद्यते ।

**श्रीमालवंशो**न्नतिकारणोऽभूत् श्रेष्ठी पुरा **झांझण**नामधेयः।
पत्नी च तस्याऽजनि **जयतुगा**ख्या सद्दानशीलादिगुणैकभूमिः॥ २॥
तत्पुत्रः श्राद्धधुरोऽजनि जनितनयो **लूणसिंह**ाभिधानो, **लीलादेवी**ति नाम्ना प्रथितगुणगणा प्रेयसी तस्य चासीत्।
तत्पुत्रश्चाजनिष्ट प्रथमहढवरः श्रावको **मुंजनामा, माला**ख्यश्च द्वितीयोऽजनि गुणनिभृतः **साल्हका**ख्यस्तृतीयः॥३॥
आद्या सुता **माणिकि**नामधेया **सोषी**ति नाम्ना प्रथिता द्वितीया।
**पूजी**ति च ख्यातिमगात् तृतीया **धुनी**ति नाम्ना विदिता च तुर्या॥ ४॥
एता विरेजुः शुभभावपूर्णा **लावण्यसिंह**स्य सुताश्चतस्रः। चतुष्कषायज्वलनोपशांत्यै पीयूषकुल्या इव मूर्तिमत्यः॥ ५॥
पुण्याशयात् पंडित**हर्षकीर्ति**गणिभ्य एताभिरुदारधीभिः।
अदीयता**वश्यक**पुस्तिकेयं सिद्धांतभक्त्या किल लेखयित्वा॥ ६॥
नग-नगर-निवेशैर्मंडिता भूतधात्री जगति जयति तावत् वीरतीर्थं च यावत्।
भवभयपरिमुक्तैः साधुभिर्वाच्यमाना भुवि जयतु नितान्तं पुस्तिका**वश्यक**स्य॥ ७॥

**संवत् १३९१** वर्षे **तिमिरपुर**वास्तव्य व्य० **लावण्यसिंह**भार्यया **लीलादेव्या** पं० **हर्षकीर्ति**-गणिभ्य **आवश्यकपुस्तिका** वाचनाय प्रदत्ता॥

# [ ८६ ]

## प्राग्वाटवंशीय-श्रेष्ठिलींबा-श्रेयोऽर्थ-लिखित-धर्मविधिवृत्ति-पुस्तकप्रशस्तयः*।

[ लेखनसमय १४१८ विक्रमाब्द ]

–इति श्री**उदयसिंह**ाचार्यविरचिता उदयांका षड्द्वारा श्री**धर्मविधिवृत्तिः** समाप्ता॥ ग्रंथाग्र० ५५२०॥

**संवत् १४१८ वर्षे ची( चां ? )**बाग्रामे श्री**नरचन्द्र**सूरीणां बांधवेन पंडित**गुणभद्रेण कच्छूली** श्रीपार्श्वनाथगोष्ठिक **लींबा** भार्या **गउरी** तत्पुत्र श्रावक **जसा डूंगर** तद्भगिनी श्राविका **वीझी तील्ही** प्रभृत्येषां साहाय्येन प्रभुश्री**श्रीप्रभसूरि**विरचितं **धर्मविधिप्रकरणं** श्री**उदयसिंह**सूरिविरचितां वृत्तिं श्रीधर्म-विधिग्रंथस्य कार्तिकवदिदशमीदिने गुरुवारे दिवसपाश्चात्यघटिकाद्वयसमये स्वमातृपित्रोः श्रेयसे श्रीधर्मविधि-ग्रंथमलिखत्॥

### ( १ ) प्रथमा प्रशस्तिः।

**जावालिदुर्गे** नगरे प्रधाने बभूव पूर्वं **धणदेव**नामा।
**सहजल्हदेवी** दयिता तदीया **ब्रह्माक-लींबा**तनयौ च तस्याः॥ १॥
**गौरदेवी** दयिता प्रबभूव **लिंबक**स्य तनयः **कडुसिंहः**।
तस्य च प्रियतमा **कडुदेवी** तस्य चैव समभूद् **धरणाकः**॥ २॥
**ब्रह्माक**पुत्रः प्रबभूव **झंझणः प्राग्वाटवंश**स्य शिरोमणिस्तु।
**आशाधर**स्तस्य बभूव नंदनः पुत्रश्च तस्य प्रबभूव **गोगिलः**॥ ३॥
**गोगिल**स्य तनयः प्रबभूव **पद्मदेव**सुकृती सुकृतज्ञः। तस्य चैव दयिता **सुरलक्ष्मी**र्जैनधर्मकरणैककोविदा॥ ४॥
अमी जयंति तनया यस्याश्च जगतीतले। **सुभटसिंहः क्षेमसिंहः स्थिरपाल**स्तथैव च॥ ५॥

* वस्त्रमयपत्रोपरि लिखितमिदं पुस्तकं पत्तने संघसत्कभांडागारे विद्यते।

जाया सुभटसिंहस्य सोनिका हेमवर्णिका । तस्याः सुता जयंत्युच्चैरेते विदितविक्रमाः ॥ ६ ॥
तेजाको जयतश्चैव नावड[ः] पातलस्तथा । एताः पुत्र्यश्च यस्या हि कामी नामल चामिकाः ॥ ७ ॥
जाया स्थविरपालस्य श्राविका देदिकाभिधा । तस्याः सुताः षडेते च जयंति जगतीतले ॥ ८ ॥
नरपालश्च हापाकस्त्रिभुवनस्तु कालुकः । केल्हाकः पेथडश्चैव षडेते सुरसुंदराः ॥ ९ ॥
स्थविरपालस्य साहाज्जा(य्या)त् श्रीरत्नप्रभसूरिभिः । विशालया धर्मविधेः पुस्तकं वाचितं वरं ॥ १० ॥

## (२) द्वितीया प्रशस्तिः ।

कच्छूलिकामंडनपार्श्वनाथपादारविंदस्य मरालतुल्यः । प्राग्वाटवंशे भुवनावतंसे बभूव पूर्वं सहदेवनामा ॥ १ ॥
गुणचंद्रनामा तनयस्तदीयः श्रीवत्सनामा च तदंगजोऽभूत् ।
श्रीवत्सपुत्रा जगति प्रसिद्धा अमी बभूवुर्गुणराशिसंयुताः ॥ २ ॥
छाहडो निरुपमाकृतिरूपो धर्मकर्मनिपुणो यशोभटः । श्रीकुमारतनयस्तु तृतीयो वीतरागगुरुपूजनापरः ॥ ३ ॥
छाहडस्य च शाखायां श्रीमाणिक्यप्रभसूरयः । गुरवश्च ततो जाताः श्रीकमलसिंघसूरयः ॥ ४ ॥
यशोभटस्य शाखायां श्रीश्रीप्रभसूरयः । वयं च गुरवो जाताः प्रज्ञातिलकसूरयः ॥ ५ ॥
श्रीकुमारेण च पुरा वृद्धग्रामे अचीकरत् । श्रीकमलसिंघसूरीणां पदस्थापनमुत्तमं ॥ ६ ॥
श्रीकुमारदयिता अभयश्रीः सोभाकस्तदनु बोडकाभिधः ।
साल्हकः सुगुरुधर्मतत्परास्तस्य चैव तनयाः प्रबभूवुः ॥ ७ ॥
सोभाकस्य जायाभून्नाम्ना अविधवा सदा । सोला-गदाकनामानौ बभूवतुः सुतौ तयोः ॥ ८ ॥
गदाकस्य च जायाभूत् प्रथमा रतनिकाभिधा । श्रियादेवी द्वितीया च मूर्ति(र्त्या) लक्ष्मीरिवापरा ॥ ९ ॥
कर्मा-भीमाक नामानौ श्रियादेव्याश्च नंदनौ । भीमाकस्यैव दयिता रुक्मिणी रुक्मिणी परा ॥ १० ॥
रुक्मिण्याश्च त्रयः पुत्रा बभूवुर्धर्मकारकाः । लींबाकः सोहडश्चैव पेथाकश्च तृतीयकः ॥ ११ ॥
लींबाकभार्या गउरी प्रसिद्धा भक्तौ जिनेंद्रस्य जसाक-डूंगरौ ।
पुत्रौ द्वितीयौ (?) तदनु प्रसिद्धौ पुत्र्यश्च तिस्रो भुवने हि यस्याः ॥ १२ ॥
वींझिका तदनु तील्हिका श्रिया जैनशासनसरोरुहभृंग्यः ।
पूर्ववंशगुरुभक्तितत्पराः शीलरत्नभरिता भुवि पुत्र्यः ॥ १३ ॥
व्याख्यापितं श्रीउपदेशमालासुपुस्तकं श्राविकया च विंझ्या ।
स्ववंशरत्नप्रभसूरिपार्श्वात् समर्थनं श्राद्धजसेन कारितं ॥ १४ ॥

## (३) तृतीया प्रशस्तिः ।

प्राग्वाटवंशे प्रबभूव पूर्वं कच्छूलिकायां पुरि पार्श्वनामा ।
तदंगजो देसलनामधेयो बभूवतुस्तत्तनयौ प्रसिद्धौ ॥ १ ॥
बहुदेव-वीरचंद्रौ पुत्रौ जातौ मनोरमौ ।
वीरचंद्रस्य पुत्रोऽभूत् मालकः पुण्यधारकः ॥ २ ॥
मालकस्य तनया मनोरमा आसको गुणधरोऽपि हि सांबः ।
वीरकः सुकृतकार्यहीरकः आसकस्य तनयश्च सोलकः ॥ ३ ॥
सोलकस्य दयिता सरस्वती पंच यस्य तनयाः प्रबभूवुः ।
माल्हणस्तदनु पार्श्वचंद्रसा बूटरोऽथ महिचंद्र-सेढकौ ॥ ४ ॥

**सेढाक**भार्या **जसिणी**ति नाम्नी तयोश्च पुत्राः षडमी प्रसिद्धाः ।
आद्यो बभौ **राल्हण**नामधेयस्ततो द्वितीयः किल **सोहडाह्वः** ॥ ५ ॥
**आल्हणः पद्मक**श्चैव **ब्रह्माको बोडक**स्तथा । **बोडाक**स्य च दयिता **वीरी** धर्मे प्रवीरधीः ॥ ६ ॥
चत्वारस्तनया यस्या बभूवुर्वसुधातले । **देपालो देवसिंह**श्च **सोमाकः सलषो**ऽपि च ॥ ७ ॥
................................[ अग्रे किञ्चिदपूर्णेयं प्रशस्तिः ]................................॥ ८ ॥

# [ ८७ ]

## प्राग्वाटवंशीय-सांगा-गांगाभ्रातृयुगल-लेखित-कल्पसिद्धांत-पुस्तकप्रशस्तिः* ।

[ लेखनसमय १४२७ विक्रमाब्द ]

वंशः **प्राग्वाट**नामोदयगिरिरसकौ तत्र भास्वान्नवीनः, संजातो **धांध**संज्ञः स्वजनजनमनःपंकजानां प्रकाशी ।
ध्वस्तध्वांतप्रचारो गुरुगुरुचरणध्यानरोचिःसमूहैः, कुर्वन्निःशेषदोषाकरकरनिकरच्छेदमुच्चैर्विशेषात् ॥ १ ॥
**धांधा**भार्या**देल्हणदेवी**पुत्रौ समग्रगुणनिलयौ । **अर्जुन-झडसिल**संज्ञौ धन्यौ विज्ञौ च तौ जगति ॥ २ ॥
यशसार्जुनोऽ**र्जुन** इति प्रथितोऽर्जुनवर्जनात् विकाशकरः । परमात्मतत्त्वरचनासु चिरं चतुरस्य यस्य चरति मनः ॥३॥
**परीक्षि**वंशोद्धरणप्रवीणो जयी चिरं स्तात् स्वजनावतंसः ।
सुश्रावकश्रेणिषु दानदेवपूजादिभिर्मुख्यतमोऽ**र्जुनो**ऽयं ॥ ४ ॥
सौजन्यशीला **सहजल्लदेवी** प्रिया प्रियालापपराऽ**र्जुन**स्य ।
आस्ते गृहे स्वस्तिमती मतीनां गृहं गृहद्वारगतेव लक्ष्मीः ॥ ५ ॥
**अर्जुन**स्य तनयाः षडमी ते यान् निरुप्य विबुधाः कथयंति ।
षण्मुखः किमु मुखं प्रति देहत्वं चकार सुभगं पृथक् पृथक् ॥ ६ ॥
**मुंजालदेवः** प्रथमं प्रतीतो धियां निधिर्**धांधवरो** द्वितीयः ।
गुणाकरोऽसौ **गुणमल्ल**संज्ञो **धना**भिधो धन्यतमो जनेषु ॥ ७ ॥
कामार्थाविव तौ मूर्तौ **सांगा-गांगा**भिधौ सुतौ । **अर्जुन**स्य प्रियालापपरौ.........वामनौ ॥ ८ ॥
**श्रीपूर्णिमापक्ष**पयःपयोधौ बभूव चंद्रो **गुणचंद्रसूरिः** ।
संप्रीणयद् भव्यचकोरपूगं ज्योत्स्नानिभैर्यो वचसां समूहैः ॥ ९ ॥
पट्टे तदीये प्रबभूव भूरिसूरीश्वरस्थापनकृद् गणेशः । **गुणप्रभा**ख्यो गुणरत्नराशिरत्नाकरः कल्मषवर्जितांगः ॥ १० ॥
**श्रीगुणप्रभ**गुरुर्गुरुताया भाजनं जनमनोऽब्धिशशांकः । आत्मकार्यविमुखः परकार्ये प्राणदानरसिकः स बभूव ॥ ११ ॥
तत्पट्टपद्मकमलाहृदयैकहारः सारः श्रुतेन गुणवान् **गुणभद्रसूरिः** ।
सिद्धांतसागरविगाहनमंदराद्रिर्भव्यांबुजप्रकरबोधनबालसूरः ॥ १२ ॥
**श्रीगुणभद्र**सूरीणां स्फूर्तिमान् गुरुबान्धवः । **मतिप्रभः** प्रभाजालभासितावनिमंडलः ॥ १३ ॥
तस्य श्री**कल्पसिद्धांत**पुस्तकं स्वस्तिकारकं । **सांगा-गांगा**तनूजाभ्यां लेखयित्वाऽर्प्पितं नवं ॥ १४ ॥
कुलाँद्रि-पक्ष-वेदे-न्दु ( १४२७ ) संख्यया समये गते । श्री**विक्रम**महीपालात् मासे माधवसंज्ञके ॥ १५ ॥

---

* अहमदाबादे, उजमबाई धर्मशाला संज्ञकस्थानावस्थितज्ञानभांडागारे विद्यते पुस्तकमिदम् ।

# [ ८८ ]

## अवकेशवंशीय-श्रा० माल्हणदेवी-लेखित-आवश्यकलघुवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनसमय सं० १४४५ विक्रमाब्द ]

—संवत् १४४५ वर्षे चैत्र वदि ३ सोमे श्रीस्तंभतीर्थे कायस्थज्ञातीय महं जाना सुत महं मालाकेन लिखितं ॥ छ ॥

जैनत्वाव्यभिचारिभावसुभगाः सर्वेऽपि यस्मिन् जना-स्तस्मिन् धर्मयशःसमृद्धिविशदे वंशेऽवकेशाह्वये ।
श्राद्धोऽभून्नरसिंह इत्यभिधया साधुः प्रसिद्धः सुधी-स्तस्य प्रौढगुणा बभूव नयणादेवीति विचा प्रिया ॥ १ ॥
तयोरभूवंस्तनयास्त्रयोऽमी सूंजाल-माला-महीपालसंज्ञाः ।
मालाभिधस्तेषु विशेषधर्मी पुण्याय पाणिग्रहणे निषेधात् ॥ २ ॥
तेषु च महिपालस्याजनि माल्हणदेविनामिका पत्नी ।
तत्पुत्रा मेधा-मासण-सहदे-सालिगाः सुगुणाः ॥ ३ ॥
श्रीतपागच्छगगनालंकारैकविवस्वतां । श्रीदेवसुंदरगुरुसूरीणामुपदेशतः ॥ ४ ॥
माल्हणदेवी सुविशुद्धवासनाऽऽवश्यकस्य लघुवृत्तिं ।
लेखयति स शैरां-बुधि-शक्रौब्दे (१४४५) स्तंभतीर्थपुरे ॥ ५ ॥
सुराद्रिदंडस्थितिसिद्धतारामुक्तावलीकं वियदातपत्रं । श्रीसंघराजोपरि यावदास्ते सत्पुस्तकं नंदतु तावदेतत् ॥ ६ ॥

# [ ८९ ]

## क्षात्रवंशीय-झालाकुलजात-नीतल्लदेवी-लिखित [ हेमचन्द्रसूरिकृत ] योगशास्त्र-पुस्तकप्रशस्तिः† ।

[ लेखनकाल अनुल्लिखित ]

इति परमार्हतकुमारपालभूपालशुश्रूषिते आचार्य श्रीहेमचंद्रविरचिते अध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे योगशास्त्रे स्वोपज्ञद्वितीयप्रकाशविवरणं ॥ ३३०० ॥

दिशतु वः श्रियं शश्वत् श्रीमान् वीरजिनेश्वरः । प्रणयीकृतसिद्धार्थसिद्धार्थनृपनन्दनः ॥ १ ॥
सूराकः संज्ञया ख्यातः क्षत्रियाणां शिरोमणिः । श्रीमान् शांतिमदेवाख्यस्तस्य भ्राता गुणाग्रणीः ॥ २ ॥
तस्मात् पुत्रः कलाधाम सुकरानन्दितक्षितिः । विजपालो बुधश्चंद्रो झालाकुलनभस्तले ॥ ३ ॥
बभूव प्रेयसी तस्य राज्ञी राजगुणान्विता । नीतादेवीति नीतिज्ञा धर्मारंभसदोद्यता ॥ ४ ॥
राणकः पद्मसिंहाख्यस्तनयो विनयी नयी । जनानां नयनानन्दी जज्ञे पुत्री तयोस्तथा ॥ ५ ॥
श्रीमती रूपलादेवी [ वैरि ]वीरप्रमाथिनी । पत्नी दुर्जनशल्यस्य साऽभूत् प्रेमवती सदा ॥ ६ ॥
श्रीदेवीकुक्षिजस्तस्योदयसिंहाभिधः सुतः । वैरिवारणविध्वंससिंहाद्वैतपराक्रमः ॥ ७ ॥

---

* पुस्तकमिदं स्तंभतीर्थे शान्तिनाथमन्दिरस्थितज्ञानकोशे विद्यते ।

† पत्तने खेतरवसहीपाटकावस्थितज्ञानकोशे विद्यते पुस्तकमिदं ।

ततश्च–

आसंश्चंद्रकरावदातसुयशोधौताखिलक्ष्मातले, श्री**चन्द्रप्रभ**सूरयो विधिधरोद्धारादिवाराहकाः ।
तत्पट्टे प्रथिताः क्षितौ पृथुगुणाः श्री**धर्मघोषा**भिधा-स्तेषां चाऽ**भयघोष**सूरितिलकाः प्राप्ताः प्रतिष्ठां पदे ॥ ८ ॥
तेषां शिष्यतमाः प्रबोधनिपुणाः **विद्याकुमारा**ह्वयाः, दुर्दान्तक्षितिपालभालपदवीसंक्रांतचारुक्रमाः ।
पीत्वा तन्मुखकोटरान्तरगतां सद्देशनावाक्सुधां, सच्छ्रद्धाञ्चितमानसा गुरुगिरा **नीतल्लदेवी** ततः ॥ ९ ॥
कारयामास **पट्टयां** चैत्यं पार्श्वजिनेशितुः । भाविपुण्यार्जनाक्षेत्रं तथा पौषधशालिकां ॥ १० ॥
विवृतिं **योगशास्त्र**स्य संप्राप्तपट्टबन्धिनः । सत्प्रपां श्रेयसे स्वस्य लेखयामास शुद्धधीः ॥ ११ ॥
यावद् व्योमपथावलंबि निखिलं तारागणं वर्तते, प्राच्यां यावदुदेत्ययं च सविता कुर्वन् तमोमाथनं ।
धत्ते यावदसौ फणापतिरिमां भूमिं फणाग्रैः स्फुटं, तावन्नंदतु पुस्तकं मुनिगणैर्व्याख्यायमानं सदा ॥ १२ ॥

॥ मंगलं महाश्रीः । शुभं भवतु लेखक-पाठकयोः ॥

# [ ९० ]

## प्राग्वाटवंशीय-श्रे० धीणाक-लेखित-सवृत्तिकाख्यानमणिकोश-पुस्तकप्रशस्तिः* ।

[ लेखनसमयोऽनिर्दिष्टः । ]

–इति श्रीमदा**म्रदेवसूरि**विरचिता**ख्यानमणिकोश**वृत्तिः । समाप्तमिति । मंगलं महाश्रीः ।
शिवमस्तु सर्वजगतः परहितनिरता भवंतु भूतगणाः । दोषाः प्रयांतु नाशं सर्वत्र सुखी भवतु लोकः ॥

**प्राग्वाट**वंशतिलकोऽजनि **पूर्णदेव**-स्तस्यात्मजास्त्रय इह प्रथिता बभूवुः ।
दुर्वारमारकरिकुंभविभेदसिंह-स्तत्रादिमः **सलखणो**ऽभिधया बभूव ॥ १ ॥
द्वितीयकोऽभूद् **वरदेव**नामा तृतीयकोऽभूत् **जिनदेव**संज्ञः ।
सोऽन्येद्युरादत्त जिनेंद्रदीक्षां निर्वाणसौख्याय मनीषिमुख्यः ॥ २ ॥

अज्ञानध्वांतसूर्यः सरभसविलसदंगसंवेगरंग-क्षोणीक्रोधादियोधप्रतिहतिसुभटो ज्ञातनिःशेषशास्त्रः ।
निर्वेदांभोधिमग्नो भविककुवलयोद्बोधने ज्ञानचंद्रः, कालेनाचार्यवर्यः समजनि **जगचंद्र** इत्याख्यया हि ॥ ३ ॥
**वरदेव**स्य संजज्ञे **वाल्हा**विरिति गेहिनी । याऽभूत् सदा जिनेंद्रांह्रिकमलासेवनेऽलिनी ॥ ४ ॥

पुत्रास्तस्या **साढल**नामधेयाः............इत्याह्वयः **वज्रसिंहाः** ।
विवेकपात्री **सहजू** च पुत्री कुशीलसंसर्गतरोर्लवित्री ॥ ५ ॥

**साढल**स्य प्रिया जज्ञे **राणू**रिति महासती । पुत्रास्तु पंच तत्राद्यो **धीणा**ख्यः शुद्धधर्मधीः ॥ ६ ॥
द्वितीयः **क्षेमसिंहा**ख्यो **भीमसिंह**स्तृतीयकः । **देवसिंहा**भिधस्तुर्यो लघु**र्महणसिंह**कः ॥ ७ ॥
**क्षेमसिंहा**भिधो **देवसिंह**श्च भवभीरुकः । श्री**जगचंद्रसूरी**णां पार्श्वे व्रतमशिश्रियत् ॥ ८ ॥
**धीणाक**स्य **कडू**र्नाम पत्नी **मोढा**भिधः सुतः । अन्येद्युः सुगुरोर्वाक्यं **धीणाकः** श्रुतवानिति ॥ ९ ॥
भोगास्तुंगतरंगभंगभिदुराः संध्याभ्ररागभ्रमो-पम्या श्रीर्नलिनीदलस्थितपयोलोलं खलु प्राणितं ।
तारुण्यं तरुणीकटाक्षतरलं प्रेमा तडि.......... ज्ञात्वैवं क्षणिकं समं विदधतां धर्मं जनाः सुस्थिरम् ॥ १० ॥
सद्ज्ञानयुक्तो नियमवृषोधिभावन् महानंदपदप्रदायी । तत्रापि च स्वान्यविबोधकारी.........श्रुतज्ञानमिहोत्तमं हि ॥ ११ ॥

---

* एतत्प्रशस्तियुक्तं पुस्तकं स्तम्भतीर्थे शांतिनाथमन्दिरस्थितज्ञानभांडागारे विद्यते ।

तच्च कालमतिमांद्यदोषतः पुस्तकेषु भुवनकौशलैः । पूर्वसूरिभिरथो निवेशितं तद् वरं भवति तस्य लेखनं ॥ १२ ॥
एवं निशम्य तेन न्यायोपार्जितधनेन व्ययेन । **आख्यानकमणिकोश**स्य पुस्तकोऽयं व्यधायि मुदा ॥ १३ ॥
यावत्··········································वाच्यमानो बुधैः ॥ १४ ॥

# [ ९१ ]

## ऊकेशवंशीय-सा० ब्रह्मदेव-लेखित-श्रावकधर्मप्रकरणवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनसमयो नोल्लिखितः ]

जातस्य पुंरत्नगणस्य यस्य सदा समृद्धेर्विधुवत् सदब्धेः ।
खानिः सुराणामपि सैष पृथ्व्या**मूकेश**वंशः प्रवरोऽर्थहेतुः ॥ १ ॥
मुक्तामणिस्तत्र बभौ **सलक्षणः** प्रिणीतवान् यः सततं विचक्षणान् ।
गुणानुविद्धान्तर उज्ज्वलात्मको हृदि प्रधार्यो मुनिपुंगवैरपि ॥ २ ॥
**प्रल्हादन**स्तस्य बभूव नंदनो यशोवनामोदविधूतनंदनः ।
तेजोऽतिदीप्तादविविक्तमाश्रितो वियुज्य सूराद् द्विगुणादधिभ्यतः(?) ॥ ३ ॥
तत्प्रिया **नायका** जज्ञेऽर्चितश्रीतीर्थनायका । निनाय कोऽपि यां शीलभूषाशाश्वतिकीं श्रियं ॥ ४ ॥
तयोस्तनूजौ **जिनदे[व]-ब्रह्मदेवौ** महाशयौ । उदारस्फुरत्तेजस्कौ महौजस्कौ शुभाश्रयौ ॥ ५ ॥
प्राप्तामात्यपदस्य राय**मलयात् सिंहा**द्य उद्यत्प्रभो-र्यस्यारातिगणः समूलमगमन्नाशं प्रभावेऽनघे ।
श्री**जावालिपुरे** द्वितीयजिनराजोऽष्टाहिकां योऽद्भुतां, चैत्रे मासि तृतीयिकां वितनुते मन्ये वृषोद्यानिकां ॥ ६ ॥
इन्दुः पूर्णमदन्तरोचिरिषवः सन्मानसं क्रीडनावल्हावंखो(?)दर्शनराजहंससुभगं ज्योतिः प्रकृष्टात्मकं ।
लक्ष्मीर्दानवशीकृता प्रतियुगं यस्याभवत् सेविका सोऽयं धर्ममुखैश्चतुर्मुखकृतभिः सभ्रमस (?) **ब्रह्मदेवः** परः ॥ ७ ॥
**प्रल्हादन**स्य तनया विनयान्विता इमाः सा **चाहिनी** ननु **सुवर्णनिका सरस्वती** ।
तुर्या च **संपद्**भिधा जिनधर्मवासिता आवासिता अविकलोज्ज्वलशीलकेलिभिः ॥ ८ ॥
शीलालंकरणं विभाति विमलं श्री**ब्रह्मदेव**स्य सा, दाक्षिण्यादिगुणोज्वला अपमला पुत्री तथा **कर्मिणी** ।
श्री**जावालिपुरे** जिनेशभवने स्वश्रेयसेऽष्टाहिकां, चैत्रे मासि चतुर्थिकां गुरुतरां चक्रे तथा स्वस्तिकां ॥ ९ ॥
सोदर्याः सुकृते श्री**स्वर्णगिरे**स्तथा स्वजननीश्रेयोऽर्थमष्टाहिकां चैत्रे मासि ···मथ **सुवर्णी**न्याः शुभायाश्विने† ॥ १० ॥
षष्ठीमारचयन् सदापि हि महं व्याघ्रश्री**भीमदेव**सुर्नव्यां धीपुण्यफलावलिं स्वजनसाकृत्वा(?) ।
·························एतस्याधात्**पूर्णिनी** पूर्णिमालांछनत्वं·················हन्तात्यं तमोध्वंसमाना† ॥ ११ ॥
गंगाप्रवाहा इव तस्य पुत्रास्त्रयः पवित्रा **जयदेव** नामा ।
**कुमारसिंहो**ऽपि च **लक्षण**श्च स्वच्छाशया धर्मरसेन पूर्णाः ॥ १२ ॥
षोढावश्यककारिणी························ तस्य गुणोदधिका समभवत् **प्रल्हादन**स्यांगजा ।
································प्रागुक्तैव **सरस्वती** प्रणयिनी पुण्योर्मिसंवर्मिता ॥ १३ ॥

---

* एतत्प्रशस्तियुक्तं पुस्तकं स्तंभतीर्थे आचार्यवर्यश्रीविजयनेमिसूरिसत्कज्ञानकोशे विद्यते । द्रष्टव्यम्–जैनसाहित्यप्रदर्शनप्रकाशितप्रशस्तिसंग्रहे, पृ० ९२–९३ ।

† भ्रष्टप्रायमेतत्पद्ययुगलं मुद्रितसंग्रहे लभ्यते ।

पुत्राः सन्त्यनयोर्नयोदयमया मूर्त्या सुधासूतयो वाचेक्षुप्रविवर्षिणः प्रशमतो मुन्यावतारा किमु ।
................................................ शुप्रभाः दो **गजात् सिंहकः** ॥ १४ ॥
तेषु **लक्ष्मणसिंह**स्य भार्या **लक्ष्मीनिका**ऽभवत् । **भांडशालिकश्रीक्षेत्रसिंह**स्य दुहिताऽर्हति ॥ १५ ॥
धर्मस्नेहभृता पात्रदिरु प्रदर्शनदीपिका सत्मस्नेकलावत्रयाविशेषण.................. **ब्रह्मदेवो**ऽनघः ।
**लाला**दिस्वकभागिनेयसहितो भव्याक्षरैः पुस्तके वृत्तिं श्रावकधर्म[क]प्रकरणस्यालेखयामासिवान् ॥ १६ ॥
सूरीशितु**र्जिनपति**प्रभुपट्टचूलालंकारिणो युगवरस्य **जिनेशसूरेः** । ..........................
............................[ अग्रे किंचिदपूर्णेयं प्रशस्तिः । ]..................................

# [ ९२ ]

## धर्कटवंशीय-श्रे० देवसिंह-लेखित-त्रिषष्टिशलाकापुरुषचरित्रान्तर्गत-महावीरचरित्र-पुस्तकप्रशस्तिः* ।

[ लेखनसमय अनुल्लिखित ]

............सोऽस्तु वीरस्तदनु विदितधामा गौतमस्वामिनामा ।
अपहरतु परेषामापदं **वैरिशाखा** सफलितजनताशा विश्वविश्वप्रकाशा ॥ १ ॥
तस्याम्म्बरभास्वरं कुलगृहं लक्ष्म्याः क्षमालिंगितः.............................येन मुदि च यः ।
नित्यं श्रीपतिकेलिमंदिरमसौ मुक्तो न मर्यादया...........विजयते **संडेरगच्छां**बुधिः ॥ २ ॥
पूर्वं **वालभगच्छ**मंडनमणिः **संडेरगच्छ**..........पत्तेह्यांगिनिका न कः स्तुते बुधः शाली नवांभोधरः ।
जज्ञे **शांति**मुनीश्वरः किल शराश्वाक्ष्यब्दे वृन्दे गते (?) यद् व्याख्यागलगर्जितैः सुरविभुर्विश्वंभरा वैभवात् ॥ ३ ॥
आचार्यवृन्देषु तदीयगच्छे जातेष्वभूत् धर्मजनेषु.......... ।
लीलावती लोचनबाणकामं वीरं विनिर्जित्य बभूव शब्दः ॥ ४ ॥
समजनि मुनिरत्नं तस्य शिष्यावतंसः सुरपतिगुरुनाभिः सस्पृहं गीतकीर्तिः ।
सुकृतिभिरभिवन्द्यः श्री**यशोभद्रसूरि**र्नवजलधरधारासन्निभोक्तिरतंद्रः ॥ ५ ॥
येषामाबालकालाद् विकृतिपरिहृति वर्जितं तांबूलं च मेघावृष्टिः सकलालपिवाचनेऽम्बानिषेधः (?) ।
**षंडेरे पल्लिका**ज्यानयनमथ नभोवर्त्मनेत्यादिकानि श्रुत्वा नानाद्भुतानि त्रिजगति कृतिनो....... ॥ ६ ॥
**क्षेमर्**षिश्चाजनि चांतराले मराललीला इति मागधानां । वंशोऽस्ति क्रीडाकरराजहंसः शुभ्रैर्यशोभिर्धवलीकृतात्मा ॥ ७ ॥
येनोत्तुंगविशाल**कंबलगिरौ** तप्तं तपो दुर्लभं........................................ ।
× × [ इतोऽग्रे त्रुटिताः प्रायः ९ संख्याकाः श्लोकाः ] × ×
.............................................मुमुक्षोः शिवपथि यततः साधुसार्थाधिपत्यं ॥ १६ ॥
तस्मादत्र जितेंद्रियः शमनिधिर्विद्यावधूदर्पणः, श्रीमा**नीश्वर**सूरिरित्यभिधया वाचंयमग्रामणीः ।
यो बालोऽपि धुरं बभार महतीं धौरेयवल्लीलया, धीरः पंचमहाव्रतप्रणयिनीं वैराग्यवीतस्पृहः ॥ १७ ॥
तत्रास्ति सुकृतिपदे सूरिमंडलमंडनः । **शालिसूरि**रियं नामा गुणरत्नैकरोहणः ॥ १८ ॥

---

* एतत्प्रशस्तियुक्तं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरावस्थितज्ञानभाण्डागारे विद्यते ।

इह धर्कटवंशेऽभूत् वरदेवोऽभिधानतः । निश्चितं वरदेवोऽयं पुरुषः कुलभूषणं ॥ १ ॥
भार्या पूर्णमतिस्तस्य पूर्णा पूर्णमतिर्मना । तत्कुक्षिसंभवाः पंच तनुजाः पांडवा इव ॥ २ ॥
आद्यो लक्ष्मीधराख्योऽभूत् द्वितीयो नामुताभिधः । तृतीयः पासडः ख्यातश्चतुर्थः कालियाभिधः ॥ ३ ॥
पंचमो जगदेवाख्यः सुकृतिकृतिवत्सलः । भार्या लक्ष्मीधरस्याभूत् कमलश्रीरिति नामिका ॥ ४ ॥
तत्कुक्षिमानसे राजहंसो राजाक इत्यभूत् । राजाकस्य मता भार्याऽभयश्रीरिति संज्ञया ॥ ५ ॥
तस्याः सुतद्वयं जज्ञे प्रथमोऽभयपालकः । द्वितीयो हरिचंद्राख्यश्चंद्रवचारुकांतिमान् ॥ ६ ॥
पासडस्य हि भार्याऽभूत् जयश्रीरिति नामतः । तयोः सुतद्वयं जातं पुत्रिकाद्वितयं तथा ॥ ७ ॥
यथार्थितस्वनामाऽभूत् कुलधरो धुरि कृती । द्वितीयो देवसिंहाह्वो देवादिगुरुभक्तिभाग् ॥ ८ ॥
पुत्रिका मोहिणिः ख्याता सदा धर्मपरायणा । द्वितीया सोहिणिर्जाता गुरुस्वजनवत्सला ॥ ९ ॥
कुलधरस्य भार्याऽऽसीत् देवश्रीरिति नामतः । रूपलावण्यसंयुक्तो नरसिंहः सुतोऽभवत् ॥ १० ॥
नरसिंहस्य भार्यास्ति नाम्ना लाच्छीति विश्रुता । कलत्रं देवसिंहस्य देवमतिरिति श्रुता ॥ ११ ॥
तस्याः सुतद्वयं जातं पुत्रिकात्रितयं तथा । आद्यो नयणसिंहाख्यः परः पृथिमसिंहकः ॥ १२ ॥
पुत्रिका मयणू नाम्नी द्वितीया भीमिणिस्तथा । तृतीया आल्हूका जाता स्वाजन्यगुणवत्सला ॥ १३ ॥
कलत्रं कालियाकस्य धनश्रीरिव देहिनी । तस्याः कुक्षिसमुद्भूतौ पुत्रौ धीणा-धरणिगौ ॥ १४ ॥
मेइणीति तथा पुत्री हांसिका-झंझुके परे । जगदेवस्य जायाऽस्ति नगश्रीरिति संज्ञया ॥ १५ ॥
तस्याः कुक्षेस्तु संजातास्तनूजास्त्रय इहोत्तमाः । आद्यः क्षेमसिंहस्तु पांगुरश्च वयंजलः ॥ १६ ॥
पुत्रिकात्रितयं जज्ञे छाडि केल्हु च लीलुका । भार्याऽस्ति क्षेमसिंहस्य रूपिणीति सुविश्रुता ॥ १७ ॥
जातं तत्पुत्रचतुष्कं लक्ष्मणो हरदेवकः । तृतीयोऽरपतिर्नाम चतुर्थो वेल्हुकाभिधः ॥ १८ ॥
............................................ । खूडा भार्या च चाडुलु तत्पुत्रः पद्मनामकः ॥ १९ ॥
इत्थं कुटुंबेन समं विचिन्त्य संसारसर्वस्वमनित्यमेव ।
स्वकीयमातुः परिपुण्यहेतुः श्रीवीरवृत्तं परिलेखयित्वा ॥ २० ॥
पुस्तकं वाचयामास देवसिंहो महामतिः । नंदताद् यावचंद्रार्कं संघेन सह सर्वथा ॥ २१ ॥

॥ शुभं भवतु ॥

# [ ९३ ]

## धर्कटवंशीय-श्रे० शांति-लेखित-उत्तराध्ययनबृहद्वृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनसमयो नोपलब्धः ]

श्रीश्रीमालपुरीय-धर्कटमहावंशः सुपर्वोज्वलः, सच्छायः सरलः सुमूलसहितः ख्यातोऽस्ति भूमंडले ।
यक्षाख्योऽथ बभूव तत्र गुणभृद् मान्यः क्षितीशैरपि, ज्यायोवृद्धविभूषितोऽमलतनुर्मुक्ताफलप्रोज्वलः ॥ १ ॥
विहितविशदचित्तः पात्रविन्यस्तवित्तः, प्रतिदिनशुभचर्यः सूव्रतः शिष्टधुर्यः ।
निरुपमशमभूमिः सद्यशःश्रीनिधानं, नयविनयवरिष्ठः श्रावकः सत्प्रतिष्ठः ॥ २ ॥

* एतत्प्रशस्तिसंयुक्तं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरावस्थितज्ञानभाण्डागारे विद्यते ।

प्रीत्या जिनस्त्रिभुवनप्रभुरेक एव चित्ते निवृत्तभवसंगतिहेतुदोषः ।
तच्छाशनोदितनयानुगता च वृत्तिर्वाक्कायंयोरुचितभाषणकृत्यपूता ॥ ३ ॥
उदारता दक्षिणता कृतज्ञता विवेकिता सज्जनसंगचित्तता । इत्यादयोऽत्र गुणातिराग·········॥ ४ ॥
पत्नी बभूव सा तस्य **यशोदेवी** विवर्जिता । दूषणैर्गुणरत्नौघखानिर्निर्धूतकुग्रहा ॥ ५ ॥
अथाभूवन् सुतास्तस्याश्चत्वारोऽपि विचक्षणाः । **देवचन्द्र** इति ज्येष्ठः **प्रद्युम्ना**ख्यस्ततः परः ॥ ६ ॥
शांतेर्गेहमथ **शांति**र्यशोभूमिस्तथा **जसः** । प्रधानलोकपान························ ॥ ७ ॥
···········शीलाः विशिष्टलोकैरभिनंदनीयाः । ···························· ॥ ८ ॥
अथासौ सा **यशोदेवी** संवेगात् सिद्धमानसा । एकदा चिन्तयामास संसारं वीक्ष्य दुस्तरं ॥ ९ ॥
आयुर्वायुविधूतचूतलतिकालोलं वयो विस्फुरद् विद्युद्दीप्तिचलं स्मरार्ततरु शिवभंगुराश्रियः (?) ।
·····································य सौख्यमोक्षकृदहो धर्मः परं सेव्यते ॥ १० ॥
प्रभवति स च ज्ञानात् तच्चार्हदागमतः स च, प्रतिकलगलत्प्रज्ञैर्ज्ञेयो विना नहि पुस्तकं ।
इति तदमलचक्षुः पुंसां कुबोधविषौषधं, शिवसुखकरं लेख्यं लोकद्वयीहितकृत् परं ॥ ११ ॥

किंच—

कामोद्दामदवैकयोगसवराकीर्णे (?)··········तां मूढानां दृढमंगिनां विषयतृट्खेदच्छिदे तन्यते ।
धन्यैर्येन मतं विलेख्य विधिना ज्ञानामृताम्भः प्रपा························· ॥ १२ ॥

उक्तं च—

ज्ञानदानं···तदिह जिनपतिः केवलालोकमाप्य त्रैलोक्यं बोधयिष्यन् समवसृतिगतः पूर्वमेवाख्यदेवं ।
भो भव्या ! मोक्षसौख्यं··························तायां सुकृतकृति सदा वर्तितव्यं क्रियायां ॥ १३ ॥

यतः—

अज्ञानतः कृत्यविधौ प्रवृत्तो न प्राप्नुयादैहिकमप्युपेयं ।
स्वर्गापवर्गोद्भवसौख्यरूपं पारत्रिकं किं पुनरार्हतोऽपि ॥ १४ ॥

ज्ञात्वा चित्रितमेतदस्तविविधव्यापद्व्रजं भक्तिवा (?) सेकादुत्कटकंटकोत्करमिषप्रोद्भूतपुण्यांकुरः ।
अर्हद्भारकसर्वसार्ववचनव्यालेखनाभ्युद्यतः **शांतिः** पुस्तकमेतदर्थमनघं व्यालेखयामास सः ॥

॥ मंगलं ॥

# [ ९४ ]

## ऊकेशवंशीय-सा०पार्श्वसंतानीय-लेखित-पंचप्रस्थानव्याख्या-पुस्तकप्रशस्तिः* ।

[ प्रशस्तेरपूर्णत्वात् निश्चितलेखनसमयो नोपलब्धः, वर्णनानुसारेण १४ शताब्दी निश्चीयते । ]

**ऊकेशवंश** एव हि जयतादिह कल्पपादपैः पूर्णः ।
कलिकालेऽपि सदा यः सर्वेषां पूरयत्याशा ॥ १ ॥
प्रगुणगुणमयोऽत्र **पार्श्व**नामा ध्वजकमलां कलयांचकार साधुः ।
स जयति मृगं मृगांकगं यो मधुरयशःकलकिंकिणीप्रगानैः ॥ २ ॥

---

* एतत्प्रशस्तियुक्तं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरावस्थितज्ञानकोशे विद्यते ।

चत्वारो **मानदेवः कुलधर-बहुदेवौ यशोवर्द्धनो**ऽस्य
**श्री**भर्तुर्बाहुभूता अजनिषत सुता धर्म्मकर्म्मप्रवीणाः ।
सत्पुत्रा **मानदेवाद्** य इह **धनदेव**स्तथा **राजदेवो**
**निंबाके**श्चाविरासन् हिमगिरित इव स्वर्गसिंधुप्रवाहाः ॥ ३ ॥
**देवधर-लोहदेवौ** जातौ **कुलधरां**गजौ । यकाभ्यां कुंडलाभाभ्यां पुण्यश्रीः समभूष्यत ॥ ४ ॥
विभ्रेजे [मु?]निचंद्रमा **जिनपतिः** पुत्रो **यशोवर्धन**-क्षीराब्धे**र्जिनचंद्र**विष्णुपदमाक्रांतं नितांतं महत् ।
बालेनापि हि येन साधुषु बहुज्योतिष्पु राज्यं दधे, शेषानां शिरसि स्थितं पितृकुलं विश्वं च संप्रीणितं ॥ ५ ॥
संजज्ञे **बहुदेव**साधुनृपतेः **पद्माकरो**ऽस्यांगभूः, पद्माभो गुरुदेवपादकमलार्चाभिः कृतार्थं जनुः ।
कुर्वाणो **जयदेव**साधुरमलो **लक्ष्म्या**ख्यधुर्यप्रिया-व्याजेन ध्रुवमन्वहं तमभजल्लक्ष्मीः स्वयं देवता ॥ ६ ॥
**लक्षिका** चापरा वल्लभा शोभते पंचपरमेष्ठिपदहेमपंचेष्टकैः ।
आरभत्यत्र यस्या रसज्ञा सदा **लाहिनी** चापि पुत्री रसज्ञा मुदा ॥ ७ ॥
**लक्ष्म्यां** वृषोर्व्यां **जयदेव**साधुरजीजनच्चाक्षतबोधबीजः ।
पुत्रप्रकांडौ **वरदेव-धांधौ** शाखाकुलाधारकरौ सुसाधू ॥ ८ ॥
तत्राद्योऽजनि धार्मिको मतिमतां सीमा यतिप्रेक्षिणां, दीक्षादानगुरुर्मदोदयदवो **लक्ष्म्याः** प्रियो नंदनः ।
**श्रीजावालिपुरे**ऽत्र देवगृहिकां पार्श्वस्य वीरेशितु-श्चैत्ये यः समसूत्रयन्निजयशःश्रीकेलिशैलोपमां ॥ ९ ॥
देवार्चानिपुणश्च पंचपरमेष्ठिध्यानदानक्षमा(?) ह्वन्नैर्मल्यपरोपकारमधुरालापादिकैः सद्गुणैः ।
यं लोकोत्तरमारचय्य नरराड् मान्यं व्यलोलुप्यत, श्रद्धा कार्तयुगेषु पुंसु विधिना **धांधो** द्वितीयस्त्वसौ ॥ १० ॥
आद्यासीद् **वरदेव**साध्वधिपतेः **प्रल्हादन**स्यांगजा, जाया **चाहिनिका** निकाममधुरालापा सुधायाः प्रपा ।
सैषाऽसूत सुतं······**विमलचंद्रं** विश्वचंद्रोदयं, **साऊ-रूयड** नामिके च तनये श्रेयःश्रियःशेवधी ॥ ११ ॥
हर्षाब्दो **विमलो जिनेश्वरगुरोः** पार्श्वे सुवर्णैर्धनैः, वर्षन्नृत्यति रत्नवृष्टि तनयां प्रव्राजयन्नुत्सवैः ।
**श्रीप्रल्हादनपत्तने** जिनपतिं शांतिं प्रतिष्ठापयन्, विष्णवादीन् पुरुषोत्तमान् किल हशामद्यापि चक्रेऽतिथीन् ॥ १२ ॥
श्राद्धाः सन्ति महर्द्धिका निजगुरोर्भक्तानुभक्ता घनाः, स्तोकोक्तिप्रविधायिनोऽप्यथ सदा तत्पर्युपास्त्याहताः ।
स्वप्राणान्नधिरोपयन्निजगुरोः कार्ये तुलायां तु यो-ऽद्यैकोऽयं **विमलेंदु**रेव स इति प्रोत्क्षिप्य बाहू ब्रुवे ॥ १३ ॥
प्रिया द्वितीयाऽस्य **राजू**र्दानशीलतपोगुणाः । यदंगजाः प्रणंदंति भावनाः स्वसुराशिषा ॥ १४ ॥
षट् पुत्रा **गुणचंद्रको भुवनचंद्रो हेमचंद्र**स्तथा । ························[॥ १५ ॥]
·····························[ अग्रे अपूर्णेयं प्रशस्तिः । ]·····························

# [ ९५ ]

## ऊकेशवंशीय-श्रा० खेतू-लेखित-अभयकुमारचरित्रादि-पुस्तकपञ्चकप्रशस्तिः* ।

[ लेखनसमयः १४ शताब्दीपूर्वभागः ]

श्रीचन्दनाशोकसुबन्धुजीवपुन्नागसन्तानकदम्बकश्रीः ।
माकंदकुन्दार्जुनजातिराम **ऊकेश**नामा बत भाति वंशः ॥ १ ॥
वीरदेववरभक्ति**र्वीरदेव** इहाभवत् । मुक्ताफलमिव श्राद्धः शुचिः साधुमनोहरः ॥ २ ॥

* इयं प्रशस्तिरेकस्मिन् त्रुटितताडपत्रे लिखिता लब्धाऽस्माभिः । अशुद्धिबहुला भ्रष्टपाठापीयमितिहासदृष्ट्या विशेषोपयोगिनी ।

**पार्श्वा**भिधः साधुरभूत्तदङ्गजोऽजिह्मं पटुः सद्गुणधर्मकर्मणि ।
प्रभूतलक्ष्मीर्गुरुरामरागभूः समुद्रमध्यस्थपरोपकारकृत् ॥ ३ ॥

तत्पुत्रो **मानदेवः** समजनि धुरि यस्याख्यया प्रापि गोत्रं सर्वं प्राप्नोति सिद्धिं **कुलधर-बहुदेवौ यशोवर्धनश्च** ।
जज्ञुस्तस्यानुजास्ते जगति वरदृशां पूर्णचन्द्रप्रकाराः कीर्तिज्योत्स्नाच्छटाभिर्दिशि दिशि परमं ये प्रकाशं प्रचक्रुः ॥ ४ ॥

**यशोवर्धनि**रूपशील···सुवा भूस्वस्तरुनंदने स्वे पट्टे **जिनचन्द्रसूरि**हरिभिर्बाल्यान्मुदा रोपितः ।
साधुस्कन्धविशालपात्रसुमनःश्रेयःफलस्थापको लोके मर्त्यगणैर्न कै**र्जिनपतिः** सूरिः सदोपास्यते ॥ ५ ॥

**मानदेव**स्य साधोस्त्रयः सांगजाः सन्ति **धनदेव**साधुस्तदादिरपरः ।
**राजदेव**स्तदनु साधु**र्निंबाभिधः** स्वकुलकुमुदाकरानंदपर्वेंदवः ॥ ६ ॥

**धनदेव**स्य **धनश्रीर्जिनपाला**दीनसूत सुतानष्टौ । जायाद्या **गुर्जरी**ति परा वरायस्युताना तु ॥ ७ ॥

एषु सास्ति **यशोधरो जिनपतेः** सौवात् पितृव्याद्गुरोः साधुश्रेणिपतेः सुसाधुकमलाभागं समादाय यः ।
सद्धर्मे व्यवहारकोटिमकृतः······शुद्धिहेतोस्तथा संलेभे नितरामयं मुनिजने साधूत्तमत्वं यथा ॥ ८ ॥

·········यः शरणश्च साधुरिदमीयः **साहण**श्चात्मभू**र्वीरी**जानि········ङ्गजो गुरुरुचिः **सोमः** कलाभूरभूत् ।
यात्रास्तीर्थगणे विधाय निजसद्धर्म········ नु यत् प्रीत्या शीतलनाथदेवगृहिकां **वीजापुरे**ऽचीकरत् ॥ ९ ॥

**निम्बदेव**स्य गेहिन्यावासातां प्रथमा तयोः । **पद्मश्रीः** सद्गुणावासा शीलहंसकृतादरा ॥ १० ॥

तद्भार्याऽन्या **जसहिणि**र्या नमस्कारकोटिकां । गुणयित्वोद्यापनकं चक्रे कोट्यक्षतादिभिः ॥ ११ ॥

पूर्वा **जेहडसाधु**मंगजवरं तेजःप्रतिमांसवः **पद्मश्रीः** श्रितहर्षमानसुमनोमार्गांनिशावस्थितिं ।
एकामात्मभुवं च **कंचन**भिधां नक्षत्रमालाश्रियं नित्यैकक्रमचारिणीं कुलनभोलंकारशीलेन्दुगां ॥ १२ ॥

साधू **लालण-खीम्बडौ** स भवतः श्रेयःकलासंगतौ सोम्यौ चामृतवर्षिणौ कुलगुरूपास्ती परस्याः सुतौ ।
**वाल्ही**त्यस्ति सुता कृताऽनणुतपा साध्वी सुकेशी च या नित्यैकांतरभुक्तिकांतरमहो पक्षोपवासादिकृत् ॥ १३ ॥

स्थानेऽस्ति साध्वी वरपुण्यभाजनं **लक्ष्म्यं**गभूः **खीम्बड**साधुपुत्रिका ।
**जिनेश्वरैः** सूरिभिरर्पितव्रतश्रीका गुणै············**सुंदरी** ॥ १४ ॥

**आम्बश्री**-प्रियसाधु**लालण**तनूजन्माऽसकौ विद्यते नाम्ना साधु**कुमारपाल** इति यः पित्रोः सुपुण्यश्रिये ।
श्रीपद्मप्रभनाथदेवगृहिकां **वीजापुरे**ऽकार्यहो ! **आँबी** पुण्यतरंगिणीं त्रिपथगां कर्तुं वयं मन्महे ॥ १५ ॥

**जिनप्रबोधसूरी**णां पार्श्वे चाग्राहयद् व्रतं । स्वं सुपुत्रं **स्थिरकीर्तिं** सत्पुत्रं( त्रीं ? ) **केवलप्रभां** ॥१६॥ युग्मम् ।

**जेहड**साधोर्धुतबहुमाये शीलतपोजलगतमलकाये । षड्डपधानमालास्ति शुभाये (?) **लक्ष्मी-श्री**जाये ॥ १७ ॥

**मोहिणि**राद्यायास्तनया प्रत्यतिष्ठिपद् या निजगुरुभिः । सपरिकरौ जिनपार्श्वौ सुतपःशीलाभरणरम्या ॥ १८ ॥

येन **श्री**रात्मभूरत्नचतुष्कं कांतिबंधुरं । संपूरितवती **लक्ष्म्या** मांगल्यं स्वगृहागमे ॥ १९ ॥

तत्राभूद् धुरि **नागपाल** उरुधीः·········योऽचीकरत् सार्धं **लालण**साधुना स्वजननीपुण्याय वीरप्रभोः ।
चैत्ये द्वादशदेवदेवगृहिकां सौवर्णकुंभध्वजां श्री**जावालिपुरे** तथा द्विरकरोत्तीर्थेषु यात्रां मुदा ॥ २० ॥

**वीजापुरे** वासुपूज्यविधिचैत्ये शशिप्रभे । श्रीदेवगृहिकां यश्च स्वपुण्याय न्यधापयत् ॥ २१ ॥

**जिनेश्वरगुरोः** पार्श्वे महर्ध्या यो व्रतं ललौ । प्राज्ञः सुतापशक्ति(?) **विद्याचन्द्रमुनिः** परं ॥ २२ ॥

तीतीर्षुकः स नुरमति**र्बालचन्द्रो**ऽथ चक्रे । यः श्री**शत्रुंजय**मुखमहातीर्थे समकार्षीत् ॥ २३ ॥

अजित-संभवयोरभिनंदन-सुमतितीर्थकृतो जिनगेहिकाः ।
विनिरमापयदत्र च यश्चतुर्विधसुधर्मरमानिलयानिव ॥ २४ ॥

यश्चैत्येऽत्र च दंडनालममलोघद्धूतपट्टोद्धटं सन्मुक्तानिपुणं सहंसकनकश्रीकुंभवत् काश्रितं ।
तच्छत्रं वरपद्मभमात्रदयितापुण्याय चाधापयल्लोलंती चमरेव येषु सुमनोहंसाविवास्याग्रतः ॥ २५ ॥
यात्रा **रैवतका**दिषु प्रकृतवांस्तीर्थेषु संघान्वितश्चैत्यार्चादिककार्यचिंतनमुनिसद्भक्तिवृत्तामलः ।
श्रेयःश्रीवरकीर्तिकांतिललितैः सत्यां स्वकीयाभिधां तन्वानः **कुलचन्द्र**साधुऋजुधीस्तुर्यः समास्तेऽसकौ ॥ २६ ॥
आदेशाच **जिनेश्वरस्य** सुगुरोः श्रीवासुपूज्यप्रभुप्रासादे वृषभादिदेवगृहिकाप्रारंभमारंभयन् ।
यस्तामादिजिनस्य देवगृहिकामाधापयद् **वैक्रमे वर्षे**ऽष्टद्विशि**खीन्दु**मानविदिते माघे नवम्यां सिते ॥ २७ ॥
एषां सहोदरा भग्नी **कुमारी**त्यस्ति या व्यधात् । श्रेयोमालां द्विधा लातुं तपः षडुपधानकम् ॥ २८ ॥
**पद्मला नागपालस्य नागश्री**श्च प्रिये प्रिये । ······शीलतपसोः पालने नित्यव्याप्टते ॥ २९ ॥
स्वां श्वश्रूं न्वनुकर्तुमत्र चतुरः पुत्रानसूतादिमा साधु**मोहण** आद्य एषु जनुषा श्रेयोगुणैश्चावरः ।
**पाता**ख्यः शुभमूर्त्तिकोऽथ **लखमो**ऽन्यो **देवसिंहो** लघुर्ये······स्वपराभवे कुलगतं गच्छंति तेजो निजं(?) ॥३०॥
**पद्मला**म्बाकृते साधु**मोहणः** सुविधीशितुः । कारयन् देवगृहिकामन्यूनकं यशो व्यधात् ॥ ३१ ॥
**पाता**ख्यः श्रीसुपार्श्वस्य स्वाख्यया देवगेहिकां । कारयामास यत्सूनुः **पद्मः पाल्हणदेवी**भूः ॥ ३२ ॥
**नागश्रि**या आत्मभुवौ सुपद्मौ ·········रम्यगुणाभिरामौ ।
श्री**मूलदेवो धणसिंह** एतौ सद्धर्मबुद्धिस्तनया च **नाही** ॥ ३३ ॥
श्रीवासुपूज्यपूज्यार्थे सघाटौ पीतलामयौ । प्रदीपप्रवरौ प्रादात् **नागश्रीः** सुकृतासये ॥ ३४ ॥
**जंबूमुनि**प्रमुखपूर्वयुगप्रधान-श्री**पार्श्वनाथजिन**चारुचरित्ररम्या ।
ज्ञानप्रपा प्रविदधे किल पुस्तिकैषा **नागश्रि**या शुभधिया तु निजौरसाभ्यां ॥ ३५ ॥
सा **बालचन्द्र**दयिता **घेल**ाभिधास्ति शीलतूलीया । अकृत षडुपधानांकं श्रेयस्तल्पे सुखं ललितुं ॥ ३६ ॥
एतस्यास्तनयौ साधू नेत्रवत्सरलाकृती । सुव्यापारौ सदा लोके स्तरेतौ **हेम-जैत्रलौ** ॥ ३७ ॥
**राल्हण**साधुसुतावर**वइजी**-श्रेष्ठि**त्रिभुवनसिंह**सुपुत्री ।
साधोः **कुलचन्द्र**स्यास्ते जाया **खेतू**·········द्धर्मशुभाशा ॥ ३८ ॥
साक्षादात्मनि वीक्ष्य सुकुलजनुरुपेत्यादर (?) दिव्यालङ्कृतिवस्त्रगन्धकुसुमाभोगं फलं श्रेयशः ।
तत्सर्वेश्वरदानशीलसुतपोभावेषु दानाद्यतः श्रेयः प्रीणयितुं विशेषत इयं योत्तिष्ठमाना ध्रुवं ॥ ३९ ॥
प्रासादे जिनवासुपूज्यसुविभो**र्विद्युत्पुरे**ऽचीकरच्छ्रीवीरप्रतिमांकखत्तकवरं मातॄंश्चतुर्विंशतेः ।
तीर्थेशां च करात् **जिनेश्वर**गुरोस्तासां प्रतिष्ठामधाच्चैत्रैकादशीकादिने रसँ-कँर-त्र्येकमिते वत्सरे ॥ ४० ॥ युग्मम् ।
श्री**शत्रुंजय**मुख्यतीर्थनिवहे यात्रामकार्षीच या चैत्यानां निरमीमपच्च कुसुमैर्लक्षेण पूजाधनः ।
श्रीश्रेयांस-जयाजदेवगृहिके श्रेयोनिधिप्राप्तयेऽभिज्ञाने **धनसिंह**नामकलघुभ्रातुस्तथा स्वस्य च ॥ ४१ ॥
ज्ञानार्चां **कुलसाधु**रिमकां सत्पुस्तिकादीपिकां **पृथ्वीचन्द्रचरित्र**रत्नघटितां **खेतू**प्रियायाः कृते ।
क्रीत्वा धाप्यव सौवसद्गुरुजनेभ्योऽदादियं येन तैस्ताभ्यां दर्शितमार्गतः ······श्रीभव्यसार्थैः समः ॥ ४२ ॥
श्रीतीर्थेश**जयाभुवो**ऽ**भयकुमारर्षे**श्चरित्रोत्तमे ·········त्रितये व्यलीलिखदियं **खेतूः** सुवर्णैर्ध्रुवं ।
ज्ञानश्रीनिधिवीजकं ·········ध्वसात्प्राकरोत्पचेनास्य बलात् क्षणादपि लभे श्रेयोवरं स्वश्रियः ॥ ४३ ॥
श्रीवासुपूज्यचैत्ये श्रीपार्श्वमुखत्तकं कवलयंतः । व्यधापयत् **कुलचंद्रः** श्रेयोऽर्थं **महणदेवि-पद्मलयोः** ॥ ४४ ॥
आस्तेऽन्या **कुलचंद्रस्य** प्रिया **कांवलदेविका** । भावेन याऽऽत्मधर्मं च वर्धयत्यात्मबालकं ॥ ४५ ॥

श्रीमन्महावीरजिनेन्द्रबिम्बं कर्पूरखंडस्य च मानपिंडं ।
निश्रेयसेऽकारि यया स्वकीयं किं पुण्यपुञ्जं हि भवांतरीयं ॥ ४६ ॥
भोः ! श्लाघ्यो न कथं सतां वृषवरोऽसौ **मानदेवान्वयो** येनानुत्तरभाग्यदेवगृहिकाभारः स निर्वाह्यते ।
श्री**वीजापुर**वासुपूज्यभवने सार्धं वृषं ज्यायसा संघेनोत्तरपक्षदेवगृहिकाप्राग्भारमाबिभ्रता ॥ ४७ ॥
यावद् चौर्वैरवर्णिनीव विमलच्छायाम्बरश्रीर्लसन्नातारारविभूषणा सुरसरिद् हीरोत्तरीयं दधिः ।
उच्चैः खेलति चंद्रनायकशुभेनक्षत्रमात्राञ्विना तावत् पंचसुपुस्तके गृहमणीवोद्योतिका तादृशौ ॥ ४८ ॥
श्री**जिनेश्वर**सूरीणां विनेयो लब्धिशालिनाम् । अस्यां प्रशस्तौ शस्तायां श्री**कुमारगणिः** कविः ॥ ४९ ॥

## [ ९६ ]

## ओकेशवंशीय-श्रा० राजू-लेखित-जंबूद्वीपप्रज्ञप्तिसूत्र-पुस्तकप्रशस्तिः*।

[ प्रशस्तेरन्तिमभागविनष्टत्वात् लेखनसमयो न ज्ञातः । ]

॥ ॐ नमः ॥

**ओकेशवंशे जगसिंह**साधोस्तनूद्भवोऽजायत साधुमुख्यः ।
वदान्यधुर्यः **पद्मा**भिधानः ख्यातः पृथिव्यां गुणगौरवेण ॥ १ ॥
प्रियाऽस्ति तस्यामलशीलभूषणेनालंकृता **पूनसिरी**ति नाम्नी ।
तत्कुक्षिपाथोरुहराजहंसी **राजूः** प्रसिद्धाऽस्ति सुता तु तस्य ॥ २ ॥
.......................................... ॥ ३ ॥
......भवत् साधुः श्रीमान् **नरपति**र्गुणी । तस्याभवत्तनूजन्मा साधु**गोला**भिधानतः ॥ ४ ॥
तत्प्रियाऽजनि **पूनाहि** पुण्यकर्मैकतत्परा । श्रीसर्वज्ञार्चने निष्ठा शीलरत्नैकमंडना ॥ ५ ॥
तस्याः कुक्षिविभूषणं विजयवान् श्री**आसधीरा**भिधः साधुः श्रीजिनशासनोन्नति··· ।
.........................................लं सर्वत्र यो मान्यते ॥ ६ ॥
मौनं पुण्यमिव प्रौढं चतुरक्षि( २४ )जिनालयं । योऽचीकरत्तमां **शत्रुंजय**भूधरमंडनं ॥ ७ ॥
**स्तंभतीर्थे पुरे सोजींत्रिके कावीपुरे** तथा । **टींबा**ख्यपुरे **हार्थींदेणे** (?) **नगरके**ऽपि च ॥ ८ ॥
**अणहिल्ला**भिधे द्रंगे तथा ग्रामे **बलासरे** । यः श्रीजिनगृहा.................॥ ९ ॥
..........................................निजं जनुः सदापि यः ॥ १० ॥
तस्य संघपतेरस्ति सा **राजूः** प्राणवल्लभा । धर्मकर्मैकनिष्णाता शीलालंकारधारिणी ॥ ११ ॥
श्रीमज्जिनेंद्रपूजाद्यैर्दानाद्यैरपि नित्यशः । कृतार्थयति या जन्म स्वं नैकैः पुण्यकर्मभिः ॥ १२ ॥

इतश्च–

विश्वख्यात**तपागणा**..........................................[ । ]
...........विख्यामिनः सूरीन्द्रा विहरंति केवलमिलाजीवोपकाराय ये ॥ १३ ॥
तेषां श्रीयुत**देवसुंदर** इति ख्याताभिधानां गुरूत्तंसानाममृतादतीव सरसां श्रुत्वा जवाद्देशनां ।
..........................................साऽलेखयत् ॥ १४ ॥–युग्मं ।
श्रीसंघनृपस्य वासव..........................................[ ॥ १५ ॥ ]

* एतत्प्रशस्तियुक्तं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितज्ञानकोशे विद्यते ।

# [ ९७ ]

## श्रीमालवंशीय-श्रा० लक्ष्मी-लेखित-युगादिदेवचरित्र-पुस्तकप्रशस्तिः* ।

[ लेखनसमय १३३० विक्रमाब्द ]

वर्षे **त्रयोदशात् त्रिंशे** मार्गे श्वेतेऽह्नि पंचमे । **वृषभस्य** कृतं (?) वृत्तं श्री**जयसिंहसूरि**भिः ॥
धत्ते कुन्तलसन्ततिर्जिनपतेर्यस्यांसदंशस्थितिः, वक्त्रांभोरुहसौरभाकुलमिलद्भृंगावलीविभ्रमम् ।
स श्रेयःश्रियमातनोतु जगतीनेता **विनीता**वनीपावित्र्यप्रथमावतारचतुरः श्रीनाभिसूनुर्जिनः ॥ १ ॥
**श्रीमालान्वय**संभवः शुभमतिः श्रेष्ठी पुरा **जेसलः**, तत्पुत्रो **विजया**भिधो गुणनिधिः सिंहावतारः पुरः ।
तत्पत्न्यस्ति **त्रपलाऽऽसप**सुता तत्कुक्षिसंभूतया **लक्ष्म्या**ऽलेखि **युगादिदेवचरितं** श्रेयोऽर्थमत्रात्मनः ॥ २ ॥
जज्ञे यस्या **आंबडो** बन्धुराद्यः **सोभाकाह्वः सालिगो भीमसिंहः** ।
तस्मादेवं **माहणः पद्मसिंहः सामंताख्यो माणिकि**स्तु स्वसैका ॥ ३ ॥
अयं हि पुस्तकः स्वस्तिहेतावस्तु निरंतरं । सूरिभिर्वाच्यमानस्तु श्रीमदादिजिनेशितुः ॥ ४ ॥
यतः कल्पद्रुमनिभश्चिन्तितार्थप्रदायकः । स एव भविनामस्तु सर्वदा सर्वसिद्धिदः ॥ ५ ॥
**त्रिंशत् त्रयोदशे** वर्षे **विक्रमाद्** भक्तितस्तया । श्री**जयसिंह**सूरीणां पुस्तकोऽयं समर्पितः ॥ ६ ॥
स्वःशैलस्वर्णदण्डोपरि खचित (?) ककुभशालभंजीसशोभं तारामुक्तावचूलं जलनिधिविलसज्झल्लरीसुन्दरान्तं ।
यावद् व्योमातपत्रं तपनतपमथो बद्धगंगादुकूलं तावद् व्याख्यायमानो जगति विजयतां सूरिभिः पुस्तकोऽयं ॥ ७ ॥
॥ शुभमस्तु सर्वजगतः परहित··· ॥

# [ ९८ ]

## ऊकेशवंशीय-श्रा० लंबिका-लेखित-शब्दानुशासन-पुस्तकप्रशस्तिः† ।

[ लेखनसमय सं० १४७० विक्रमाब्द ]

विघ्नावलीविफलवल्लिलवित्रगोत्रः पार्श्वः स वः शिवकृते पदपूतगोत्रः ।
श्रीअश्वसेननरराजगरिष्ठगोत्रचूडामणिर्गुणगजव्रजविन्ध्यगोत्रः ॥ १ ॥
**ऊकेशवंश**तिलको जनकोऽजयच्छिति (?) विश्रुतो जगति ।
व्यवहारि**देदा**ख्यः सोऽभूद् भूपालनिभविभवः ॥ २ ॥
तस्यापरा सुजाया शीलालंकारभूषितशरीरा ।
**कील्हणदेवी**नाम्ना धाम्ना भूम्ना च विश्रुता जगति ॥ ३ ॥
श्रीमद्**विजेसीपितृ** (?) नाम **लंबिका** पुण्या पवित्राशयया सविस्तरं ।
श्री**कर्क[रा]**वासिविशालवंशया तयेदमालेखितमात्मभूतये ॥ ४ ॥
श्रीजैनशासननभोऽङ्गणभास्कराणां श्रीम**त्तपोगण**महाब्धिनिशाकराणां ।
श्री**सोमसुन्दर**गुरुप्रथिताभिधानां धर्मोपदेशश्रवणाज्जगदुत्तमानां ॥ ५ ॥
**॥ संवत् १४७० आषा[ढ] व० १३ ॥**

---

* एतत्प्रशस्तियुक्तं पुस्तकं जेसलमेरुनगरस्थतपागच्छीयभाण्डागारे विद्यते । जे० सू० पृ० ५१

† पुस्तकमिदं जर्मनराष्ट्रे बर्लिनमहानगरे राजकीयग्रन्थागारे विद्यतेऽधुना । द्र० वेबर, केटेलॉगपुस्तक, भाग १, नं० १६८२.

# [ ९९ ]

## नागरवंशीय-श्रे० धांधा-लेखित-पर्युषणाकल्प-पुस्तिकाप्रशस्तिः* ।

[ लेखनसमय अनुल्लिखित ]

वंशे **नागर**संज्ञे **बाहड**नामा बभूव सुश्रेष्ठी । सद्धर्मकर्मनिरतो विरतोऽपरदूषणग्रहणात् ॥ १ ॥
**आनंदो** नंदनस्तस्य सद्धार्मिकशिरोमणिः । येन **पिल्लाहिका**ग्रामे जैनमंदिरमुद्धृतं ॥ २ ॥
पत्नी **ह्यनुपमा** तस्य संजज्ञे गुणधारिणी । सद्धर्मवासितस्वांता कांता स्वजनसंततौ ॥ ३ ॥
तयोः पुत्रत्रयं जज्ञे जिनधर्मपरायणं । आद्यो **धांधा** द्वितीयस्तु सुश्रेष्ठी **रत्न**संज्ञकः ॥ ४ ॥
तृतीयश्च **जगत्सिंहो** न्यायवान् गुरुपूजकः । तत्र पूर्व्वसुतस्तस्य श्रेयोऽर्थं शुद्धभावतः ॥ ५ ॥
सार्वज्ञशुद्धसिद्धांतलेखनोद्यतबद्धधीः । श्रीपर्युषणाकल्पस्य लेखयामास पुस्तिकां ॥ ६ ॥

# [ १०० ]

## वणिक्-श्रीधरसुत आनन्द-लेखित-दशवैकालिकसूत्रवृत्ति-पुस्तकप्रशस्तिः† ।

[ लेखनसमयांका विनष्टप्रायाः, वर्णनानुसारतः १३ शताब्दी परिज्ञायते ]

संवत्.....................
दोषारुचि **चंद्रकुलं** प्रजनितबहुलक्षपापहरणत्वे । यच्चरिते सद्भासां तज्जयति महातपो हितं सकलं ॥
तस्मिन् बभूव भुवनत्रयगीतकीर्तिः श्रीमान् कृती सुकृतवान् **मुनिचंद्र**सूरिः ।
यस्याद्भुतैकचरितांबुनिधेर्गुणानां सद्ध्यानजातपरिमा गुरुणापि कर्तुः ॥
सूरिश्री**मानदेवा**भिधान[त]स्तच्छिष्योऽभूद् भूषणं भूरमण्याः ।
बद्धस्पर्द्धा यद्गुणाः कीर्तिवध्वा सो ईद्दगुर्वी (?) स्वकौतुकेन ॥
शिष्यस्तस्याजनि बहुमतः श्री**यशोदेव**सूरिर्यस्यात्यर्था गुरुगुणगणाः प्रत्यहं वृद्धिभाजः ।
ब्रह्माण्डान्तर्निजनिवसनस्थानसम्बाधभीत्या शंके ऽमुस्त्रिभुवनमदो वीक्षितुं सर्वदैव ॥
**नागपाल**सुतः श्रीमान् **श्रीधरा**ख्योऽभवद् वणिक् । जगदानन्दनस्तस्याभूद्**आनन्दा**भिधः सुतः ॥ १ ॥
स इदं लेखयामास दशवैकालिकाभिधं । पुस्तकं सूरये तस्मै श्रीमते शुद्धमानसः ॥ २ ॥

# [ १०१ ]

## कांकरिकागोत्रीय-सा०मोहणक्रीत-उत्तराध्ययनसूत्र-पुस्तकप्रशस्तिः‡ ।

**संवत् १४०१ वर्षे** माघमासे शुक्लत्रयोदशीदिने सा० **धींधा**सुत सा० **मोहण**सुश्रावकेण स्वमातु-**धांधलदेवि**सुश्राविकापुण्यार्थं श्रीउत्तराध्ययनसूत्रवृत्तिपुस्तकं मूल्येन गृहीत्वा श्री**खरतरगच्छे** श्री**जिनपद्म-सूरि**पट्टालंकारश्री**जिनलब्धिसूरि**सुगुरुभ्यः प्रादायि । प्रतिदिनं च वाच्यमानं मुनिभिश्चिरं नंदतात् ॥

---

* एतत्प्रशस्तियुक्ता पुस्तिका अहमदाबादे ऊजमबाईधर्मशालासंज्ञकस्थानस्थितभांडागारे विद्यते ।
† पुस्तकमिदं जेसलमेरुमहादुर्गस्थवृहद्भाण्डागारे विद्यते । द्रष्टव्यम्-जे० सू० पृ० १६ ।
‡ पुस्तकमिदं पुण्यपत्तने राजकीयग्रन्थसंग्रहे विद्यते । द्र० कीलहोर्न, रीपोर्ट पुस्तक, पृ० ५ ।

गोत्रे **कांकरिका**भिधे भुवि बभू**वोदा**भिधानः सुधीः
श्राद्धः शुद्धनयस्तदीयतनयो **धींधा**भिधः श्रीलयः ।
कांता **धांधलदेवि**कास्य तनुजास्तत्का जयंति त्रयः
पुण्या **मोहण-कृष्ण-कांकुण** इति ख्याताः सुता **मुक्तिका** ॥ १ ॥

**मोहणेन** निजमातृसुपुण्यश्रीनिमित्तमिदमुत्तमं पुस्तं ।
श्र्युत्तराध्ययनसूत्रसुवृत्त्योः संप्रगृह्य घनमूल्यधनेन ॥ २ ॥
श्री**जिनलब्धि**यतीश्वरगुरवे प्रादायि वाचनाविधये ।
यावज्जिनमतमेतन्नंदतु मुनिवाच्यमानमिह ॥ ३ ॥ युग्मम् ॥

# [ १०२ ]

## ओकेशवंशीय-श्रा० वर्जू-लेखित-चन्द्रप्रज्ञप्तिसूत्रवृत्ति-पुस्तकप्रशस्तिः* ।

[ लेखनसमय सं० १४४५ विक्रमाब्द ]

**ओकेशवंशे** विशदे **सौवर्णिक**पुंगवोऽस्ति **जयसिंहः** । सुश्रावकगुणयुक्तश्चत्वारश्चाभवन् पुत्राः ॥ १ ॥
पुत्र्यौ **पूनी वर्जू** द्वितीयका साधु**वइज**पुत्रेण । **लींबाकेन** व्यूढा सद्भक्तिकृतादरा सुगुणा ॥ २ ॥
[ श्री**देवसुंदरगुरु** ] सूरीणामुपदेशतः । सा **वर्जू**श्राविका पुण्यप्रभूतोद्भववासना ॥ ३ ॥
श्री**स्तंभतीर्थे** नगरे **चंद्रप्रज्ञप्तिवृत्ति**वरशास्त्रं । शर[५]-वार्द्धि[४]-शक्र[१४] वर्षे ( १४४५ ) शिवाप्तये लेखयामास ॥ ४ ॥

# [ १०३ ]

## पल्लीपालवंशीय-ठक्कुरधंधसन्तानीय-लेखित-सार्द्धशतकवृत्ति-पुस्तकप्रशस्तिः† ।

[ प्रशस्तेरपूर्णत्वात् लेखनमितिर्नोपलब्धा ]

नम्रनाकिसुरशत्रुनरेन्द्रः स्थैर्यनिर्जितसुमेरुनगेन्द्रः । विश्वविश्वनयनो गततन्द्रो विष्टपे जयति वीरजिनेन्द्रः ॥ १ ॥
भूभामिनीहारललाटपट्टललामकल्पं नगरं समस्ति । ख्यातं जने **वीरपुरा**भिधानं धनाढ्यलोकाभिनिवासरम्यम् ॥ २ ॥
पुण्यागण्यगुणान्वितोऽतिविततस्तुंगः सदा मंजुलच्छायाश्लेषयुतः सुवर्णकलितः शाखाप्रशाखाकुलः ।
**पल्लीपाल** इति प्रभूतमहिमा ख्यातः क्षितौ विद्यते वंशो वंश इवोच्चकैः क्षितिभृतो मूर्ध्नोपरिष्ठात् स्थितः ॥ ३ ॥
तस्मिन्नभूत् **ठक्कुरधंध**नामा श्राद्धः सुधीः सर्वजनाभिमान्यः ।
तस्याभवद् **रासलदेवि**काह्वा जनी च दाक्षिण्यदयानिवासा ॥ ४ ॥

× × × [ अग्रे‡ अपूर्णा ] × × ×

---

* पुस्तकमिदं स्तम्भतीर्थे शान्तिनाथमन्दिरस्थितभांडागारे विद्यते ।

† पुस्तकमिदं पत्तने संघवीपाडावस्थितज्ञानभाण्डागारे विद्यते । ‡ अन्तिमपत्रस्य विनष्टत्वात् त्रुटितेयमत्र प्रशस्तिः ।

## [ १०४ ]

### दीशापालवंशीय-श्रे०आम्रदत्तसन्तानीय-लेखित [ हेमचंद्रकृत ] महावीर-चरित-पुस्तकप्रशस्तिः* ।

[ लेखनकाल १२९४ विक्रमाब्द ]

परमगरिमसारः प्रोल्लसत्पत्रपात्रं स्फुरितघनसुपर्वा श्रेष्ठमूलप्रतिष्ठः ।
लसितविशदवर्णो वर्यशाखाभिरामः समभवदिह **दीशापालवंशः** प्रसिद्धः ॥ १ ॥
**आम्रदत्तो**ऽभवत् तत्र मुक्तामणिरिवामलः । तच्चित्रमेव यदसावच्छिद्रः.........॥ २ ॥
**श्रीदेवी**नामतः ख्याता शीलसत्यादिसद्गुणैः । प्रेमपात्रं प्रिया जज्ञे तस्येंदोरिव रोहिणी ॥ ३ ॥
†........................ । ........................ ॥ ४ ॥

## [ १०५ ]

### ऊकेशवंशीय-साधुदेदाक-लेखित-व्यवहारसूत्रचूर्णि-पुस्तकप्रशस्तिः‡ ।

[ लेखनसमयो नोल्लिखितः ]

ले० **खीवडेन** लिखितं पुस्तकं ॥ मंगलं महाश्रीः ॥
**ऊकेश**वंशप्रभवः प्रसिद्धः **वाछाक**पुत्रो **नरसिंह**साधुः ।
**सोही**तनूजास्तनयास्तदीया सप्तैव क्लृप्तोज्ज्वलधर्मकृत्याः ॥ १ ॥
तत्राद्यः **सांगण** इति **चीताक**स्त्रिभुवश्च **लाखाकः** ।
**रावण-देदाका**वथ **धानाक** इति क्रमेणामी ॥ २ ॥
**व्यवहारचूर्णि**मेनामलीलिखन्निजसुतस्य **सोमस्य** ।
**देवश्री**तनुजस्य श्रेयोर्थं साधु**देदाकः** ॥ ३ ॥
जयति जिनशासनमिदं निर्वृतिपुरमार्गशासनं यावत् ।
मुनिभिरिह वाच्यमानस्तावदसौ पुस्तको नंद्यात् ॥ ४ ॥

## [ १०६ ]

### पल्लीवालवंशीय-साधुगणदेव-लेखित-त्रिषष्टिशलाकापुरुषचरित्र-पुस्तकप्रशस्तिः§ ।

[ लेखनकाल अनुल्लिखित ]

**पल्लीवाल**कुले **पुना**त्मजो **बोहित्थ**संज्ञितः । साधुस्तस्य सुतो जज्ञे **गणदेवः** सुधार्मिकः ॥ १ ॥
खंडं तृतीयं संलेख्य **त्रिषष्टेः** पुस्तके वरं । ददौ पौषधशालायां **स्तंभतीर्थे** पुरे मुदा ॥ २ ॥
यावन्नंदति जिनमतमिदमसमं सकलसत्त्वहितकारि । तावत् सुपुस्तकं वाच्यमानमेतद् बुधैर्जयतु ॥ ३ ॥

---

* पुस्तकमिदं पत्तने संघवीपाडावस्थितभाण्डागारे विद्यते । † अन्तिमपत्रस्य नष्टत्वात् अपूर्णेयं प्रशस्तिः ।
‡ एतत्प्रशस्तियुक्तं पुस्तकं स्तम्भतीर्थे शान्तिनाथमन्दिरगतभाण्डागारे विद्यते । द्रष्टव्यम्–पिटर्सन्‌रीपोर्ट, पुस्तक ३, पृ० १७१ ।
§ एतत्प्रशस्तियुक्तं त्रिषष्टिशलाकापुरुषचरित्रगतान्तिममहावीरचरित्रात्मकं पुस्तकं पत्तने संघसत्कभांडागारे विद्यमानमस्ति ।

## [ १०७ ]

### श्रा० कुलचंद्र-लेखित-उत्तराध्ययन-पुस्तिकाप्रशस्तिः* ।

[ लेखनसमय अनुल्लिखित ]

**आशाधरा-मृत**देव्योः सुतः सर्वजनप्रियः । ख्यातो जगति शाकल्ये **कुलचंद्रे**णेति नाम्ना ॥ १ ॥
**अंबिका** तस्य संपन्ना पुत्रिका विनयान्विता । ...देशेन पुस्तिकेयं लिखापिता ॥ २ ॥
नंदतु तावद् धरित्र्यामेषा भो पुस्तिका महा । यावन्निशीथिनीनाथो तथा मार्तंडमंडलं ॥ ३ ॥

॥ भद्रमस्तु ॥

## [ १०८ ]

### पल्लीवालवंशीय-श्राविका जाऊका-लेखित-सामाचारी-पुस्तकप्रशस्तिः† ।

[ लेखनकाल १२४० विक्रमाब्द ]

**पल्लीवाल**कुलोत्तंसपेसलो **वीसलो**ऽजनि ।
**राजीमती**सुता तस्य **जयश्री**रिति गेहिनी ॥ १ ॥
तयोः सुताऽभवद्देवगुरुपादांबुजालिनी ।
**जाऊ**केति पवित्रां सा सामाचारीं त्वलीलिखत् ॥ २ ॥
**संवत् १२४०** चैत्रसुदि १३ सोमे लिखितं ॥

## [ १०९ ]

### श्रावक-यशोदेव-लेखित-जीतकल्पसूत्रवृत्ति-पुस्तिकाप्रशस्तिः‡ ।

[ लेखनसमय अनुल्लिखित ]

बभूव **लक्ष्मणः** श्राद्धः **सपुना** तस्य गेहिनी ।
**सिंह**नामा तयोः पुत्रो **रांभू**नाम्नी च पुत्रिका ॥ १ ॥
**सिंह**सूनुर्**यशोदेवः संतुका**कुक्षिभूः स च ।
पुस्तिकां **जीतकल्प**स्य श्रेयसेऽलिखत् पितुः ॥ २ ॥

---

* पत्तने महालक्ष्मीपाटकावस्थितभांडागारे विद्यते पुस्तिकेयम् ।

† पुस्तकमिदं स्तंभतीर्थे शान्तिनाथमन्दिरावस्थितज्ञानभाण्डागारे विद्यते ।

‡ इयं पुस्तिका पत्तने तपागच्छसंज्ञकभाण्डागारे विद्यते ।

# गद्यबहुलं प्रशस्तिद्वयम् ।

## [ ११० ]

### धवलक्ककादि-नगरवास्तव्य-श्रावकसंघस्थापित-मधुमतीनगरीय-वाग्देवताभाण्डागार-सत्कप्रवचनसारोद्धारवृत्ति-पुस्तकपुष्पिकालेखः ।

[ लेखनसमय संवत् १३०६ विक्रमाब्द ]

संव० १३०६ वर्षे माह सु १ गुरावद्येह श्रीमधुमत्यां प्रभुश्रीदेवेंद्रसूरि-प्रभुश्रीविजयचंद्रसूरीणां सद्देशनाश्रवणतः संजातशुद्धसंवेगैः श्रीश्रमणसंघस्य पठनार्थं वाचनार्थं श्रीवाग्देवताभांडागारकरणाय धवलक्कवास्तव्य ठ० साहर; द्वीपवास्तव्य ठ० मदन ठ० आल्हणसीह ठ० जयतसीह ठ० जयता ठ० राजा ठ० पदमसीह; श्रीमधुमतीवास्तव्य महं जिणदेव भां० सूमा व्यव० नारायण व्या० नागपाल सौ० वयरसीह सौ० रतन ठ० रतन भां० जसहड वसा धीणा ठ० लेखक अरिसीह भां० आजड; टिंबाणकवास्तव्य श्रे० दो० सिरिकुमार ठ० आंबड ठ० पाल्हण; तथा श्रीदेवपत्तन वास्तव्य सौ० आल्हण ठ० आणंद प्रभृति समस्तश्रावकैर्मिलित्वा मोक्षफलावाप्तये स्वपरोपकाराय श्रीसर्वज्ञागमसूत्र तथा वृत्ति । तथा चूर्णि तथा निर्युक्ति । प्रकरण [ ग्रं ] थ सूत्र वृत्ति । वसुदेवहिंडि प्रभृति समस्त कथा-लक्षण-साहित्य-तर्कादि समस्तग्रंथलेखनाय प्रारब्धपुस्तकानां मध्ये प्रवचनसारोद्धारवृत्तितृतीयखंडपुस्तकम् । लिखितं ठ० अरिसिंहेन ॥

ज्ञानदानेन जानाति जंतु स्वस्य हिताहितं । वेत्ति जीवादितत्त्वानि विरतिं च समश्नुते ॥ १ ॥
ज्ञानदानात्त्ववाप्नोति केवलज्ञानमुज्वलम् । अनुगृह्याखिललोकं लोकाग्रमधिगच्छति ॥ २ ॥

न ज्ञानदानाधिकमत्र किंचिद् दानं भवेद् विश्वकृतोपकारम् ।
ततो विदध्याद् विबुधः स्वशक्त्या विज्ञानदाने सततप्रवृत्तिं ॥ ३ ॥

[ पाटण, संघवीपाडावस्थित भाण्डागार ]

## [ १११ ]

### पल्लीपालवंशीय-श्रा० कर्पूरदेवी-लेखित-शतपदिका-पुस्तिकाप्रशस्तिः* ।

[ लेखनसमय सं० १३२८ विक्रमाब्द ]

॥ नमो जिनागमाय । श्रीवीराय नमस्तस्मै ॥

यो दुर्जलधिसंस्थितः दुर्जाड्यानलस्थितिः(?) । यज्ज्ञानं पूज्यते पूज्यैस्तदक्षरश्रुतं स्तवे ॥ १ ॥

---

* एतत्प्रशस्तियुक्ता पुस्तिका वटपद्रनगरे प्रवर्तकश्रीमत्कांतिविजयशास्त्रसंग्रहनामकज्ञानकोशे विद्यते ।

श्रीवाग्भट्टमेरुमहादुर्गे पल्लीपालवंशे श्रेष्ठिलाखणश्रावको बभूव । तत्पुत्राः श्रेष्ठिपाल्हू-घणहुल-वीरदेवनामानस्त्रयः । श्रे० पाल्हू भार्या रूपिणि तत्कुक्षिसमुत्पन्नौ द्वौ पुत्रौ झांझण-गुणदेवसंज्ञकौ । श्रेष्ठि वीरदेवपत्नी वीरमती-मोल्ही इति पैतृकं नाम । तस्याः सुतो गुणैर्विशालो गुणपालः । तस्य जाया गउरदेवी इति विनयज्ञा ।

इतश्च-हम्मीरपतनवास्तव्य श्रेष्ठि वारय नाम । तस्यांगजः श्रेष्ठि साल्हडः । तस्य सहचारिणी सदा सदनुष्ठानविधानतत्परा श्रेष्ठि[नी] सूहवदेवी सुश्राविका । तत्पुत्रो जिनशासनप्रभावकः सा० कडुयाश्रावकः । तस्य सहोदरा भगिनी अनारतं दान-शील-तपो-भावनादिविशिष्टधर्मध्यानपरायणा मोल्ही श्राविका । तथा सा० कडुया भ्राता उदाकश्रावकस्तस्यांगजो हीलणः । तेन सा० कडुया श्रावकेण च उदाश्रावकश्रेयोऽर्थं श्रीमत्पार्श्वनाथविंबं श्रीवाग्भट्टमेरुमहादुर्गे महावीरचैत्ये सप्तविंशत्यधिके त्रयोदशशते ( १३२७ ) स्थापितं । सा० कडुया भार्या कर्पूरदेवी । तत्सुतः पुण्यपालः दुहिता च नीतलाख्या । द्वितीया प्रेयसी कुर्मदेवी तस्यास्तनया धांधलदेवीति । एवं च कुटुंबे प्रवर्तमाने प्रवर्द्धमाने च भीमपल्यां; शुश्रुवेऽन्यदा धर्मदेशना यथा-

ज्ञानं दानवमानवासुरगणैः संपूजितं स्फुर्जितं ज्ञानाधिक्यसमृद्धिरूपसुकला नृणामिहामुत्र न ।
ज्ञानं चक्षुरिवांतरं वितिमिरं सौभाग्यभाग्यास्पदं कल्याणैकनिकेतनं तदथवा कल्पद्रुकल्पं सदा ॥ १ ॥

इत्येतद्गुरुमुखतो निशम्य श्रुतज्ञानफलं विज्ञा······[सा कर्पूरदेवी] श्राविका भक्तिभर·······तद्विंबदर्शनात् संजातहर्षप्रकर्षा आत्मश्रेयसे सर्वसिद्धांतोद्धारसारां संदेहद्रुमच्छेदननिशितकुठारधारां भव्यजनमनःप्रमोदकारिकां श्रीशतपदिकाभिधानपुस्तिकां लेखयित्वा वाचनाचार्यमिश्राणां वाचनाय प्रददौ इति ।

नंद्यान्मेरुगिरिर्यावत् तिलकद्युतिदो दिशां । तावदेषा गुरुप्राज्ञैर्वाच्यमाना सुपुस्तिका ॥ १ ॥

संवत् १३२८ वर्षे आषाढ शुक्ल पक्षे श्रीअणहिलपाटणपत्तने ठ० वयजासुत ठ० सामंतसिंहेन पुस्तिका लिखितेति भद्रं ॥ छ ॥

---

# ताडपत्रीयपुस्तकस्थाः संक्षिप्तपुष्पिकालेखाः ।

§१. **पंचमीकहा** [ महेश्वरसूरिकृता ] ❁ **सं० ११०९** ❁ [जेसलमेर, तपागच्छ भाण्डागार]

सं० ११०९ वर्षे लिखितं ।

§२. **भगवतीसूत्र** [ मूलपाठ ] ❁ **सं० १११....** ❁ [जेसलमेर, बृहद् भाण्डागार]

–समत्ता भगवती । संवत् १११...कार्तिक शुदि ६ रवौ उत्तराषाढनक्षत्रे षट्त्रिंशद्वेलाकूलाभरण-स्तंभतीर्थाभिधानवेलाकूलावासितेन गौडान्वये प्रसूत कायस्थ गुंदलात्मज सुभच्छराजांगज सेड्डाकेन भगवती पुस्तकोऽयं समलेखि ।

§३. **कुवलयमालाकहा** ❁ **सं० ११३९** ❁ [ जेसलमेर, बृहद् भाण्डागार ]

इति कुवलयमाला नाम संकीर्णकथा । संवत् ११३९ आसु वदि १ रविदिने लिखितमिदं पुस्तकं ।

§४. **निशीथसूत्रचूर्णि** ❁ **सं० ११४५** ❁ [पूना, राजकीय ग्रंथसंग्रह]

नमो सुयदेवयाए भगवतीए । जिणदासगणिमहत्तरेण रइया ॥ छ ॥ नमस्तीर्थकृद्भ्यः ॥

संवत् ११४५ ज्येष्ठ वदि १४ लिखितमिदं ॥ छ ॥ कूरीजाग्रामे मुंधयसायेन श्रीतलवाटावस्थितेन । महाराजाधिराजश्रीकर्नदेवराज्ये ॥

§५. **योगदृष्टिसमुच्चय** ❁ **सं० ११४६** ❁ [पाटण, संघसत्कभां०]

समाप्तोऽयं योगदृष्टिसमुच्चयः । कृतिः श्वेतभिक्षोराचार्यहरिभद्रस्य ।

संवत् ११४६ कार्तिक शुदि...कर्णदेवकल्याणविजयराज्ये महामात्यमुंजालयहकावस्थिते एवं काले प्रवर्तमाने इहैव श्रीमदणहिलपाटकावस्थि............ ।

§६. **निशीथसूत्रभाष्य** ❁ **सं० ११४६** ❁ [ पूना, राजकीय ग्रंथसंग्रह ]

समाप्तं चैतन्निपीथभाष्यमिति ॥ संवत् ११४६ श्रावण शुदि ६ सोमे [।।] एकैकाक्षरगणनया ॥८४००॥

§७. **ओघनिर्युक्तिसूत्र** ❁ **सं० ११५४** ❁ [पाटण, संघसत्कभां०]

ओहनिज्जुत्ती समत्ता ॥ ११३२ ग्रंथ० । संवत् ११५४ वैशाखशुक्लप्रतिपदायां रविदिने श्रीअशोक-चंद्राचार्यशिष्येण उदयचंद्रगणिना जिनभद्रलेखकहस्ताद् विमलचंद्रगणिहस्ताच्च ओघनिर्युक्तिसूत्रं लेखितं ॥ मंगलं महाश्रीरिति ॥

§८. **निशीथसूत्रचूर्णि** ❁ **सं० ११५७** ❁ [पाटण, संघवीपाडा भां०]

–निसीहचुण्णी समत्ता । मंगलं महाश्रीः । संवत् ११५७ आखाढ वदि षष्ठ्यां शुक्रदिने श्रीजयसिंघदेवविजयराज्ये श्रीभृगुकच्छनिवासिना जिनचरणाराधनतत्परेण देवप्रसादेन निसीथचूर्णिपुस्तकं लिखितमिति ॥

§९. उत्तराध्ययनसूत्र ❀ सं० ११५९ ❀ [पाटण, सं० पा० भाण्डा०]

संवत् ११५९ अश्विन सुदि ५ शुक्रे लिखितं ।

§१०. उद्भटालंकार [लघुवृत्ति] ❀ सं० ११६० ❀ [जेसलमेर, बृहद्भां०]

संवत् ११६० कार्तिक वदि ९ सोमदिने लिखिता ।

§११. पञ्चवस्तुसूत्र ❀ संवत् ११६१ ❀ [पाटण, सं० पा० भाण्डा०]

संवत्सरसतेष्वेकादसैकषष्ठ्यधिकेषु [११६१] फाल्गुनसुक्लद्वितीयायां सनिश्वरदिने । कर्म्मापनयनिमित्तं लिखितमिदं पंचवस्तुनः सूत्रं । श्रीवीरचंद्रसूरिभिर्लिखापितं ॥

श्रीवीरचन्द्रसूरिभ्यो दत्तेयं ज्ञानवृद्धये । पंचवस्तुकसूत्रस्य पुस्तिका गुणमतीश्रि(? च्छि)या ॥

[पश्चादन्याक्षरेषु–] सं० १२६२ श्रावण वदि ६ ॥

§१२. महावीरचरित्र [नेमिचन्द्रसूरिकृत, प्राकृत] ❀ सं० ११६१ ❀ [जेसलमेर, बृहद् भां०]

संवत् ११६१ चैत्र वदि ११ सोमे ।

§१३. काव्यादर्श [दंडीकृत] ❀ सं० ११६१ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११६१ भाद्रपदे ।

§१४. जीवसमासवृत्ति [मलधारिहेमचन्द्रकृत] ❀ सं० ११६४ ❀ [खंभात, शान्तिनाथभां०]

संवत् ११६४ चैत्रशुदि ४ सोमेऽद्येह श्रीमदणहिलपाटके समस्तराजावलिविराजित महाराजाधिराज परमेश्वरश्रीमज्जयसिंहदेव कल्याणविजयराज्ये एवं काले प्रवर्त्तमाने यमनियमस्वाध्यायध्यानानुष्ठानरतपरमनैष्ठिकपंडितश्वेतांबराचार्यभट्टारकश्रीहेमचंद्राचार्येण पुस्तिका लि० श्री० ॥

§१५. आवश्यकसूत्र ❀ सं० ११६६ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११६६ पोषवदि ३ मंगलदिने महाराजाधिराज त्रैलोक्यगंड श्रीजयसिंघदेव विजयराज्ये । लिहवेहेन (?) लिखितं ।

§१६. कथानककोश [विनयचन्द्रसूरिकृत] ❀ सं० ११६६ ❀ [पाटण, सं० पा० भां०]

संवत् ११६६ अश्वयुज् कृष्णपक्षे⋯⋯विनयचंद्रस्य कथानककोशः ।

§१७. संजमाख्यानक [विजयसिंहाचार्य] ❀ सं० ११६९ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११६९⋯⋯⋯ ।

§१८. अणुव्वयविही ❀ सं० ११६९ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११६९ वर्षे अश्वयुजसुदि ४ शुक्रदिने लिखितेति ।

§१९. उपदेशपद [हरिभद्रसूरिकृत] ❀ सं० ११७१ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११७१ वर्षे⋯⋯ ।

§ २०. **खरतरपट्टावली (?)** ❀ सं० ११७१ (?) ❀ [जेसलमेर, बृहद् भाण्डा० ]

संवत् ११७१ वर्षे पत्तनमहानगरे श्रीजयसिंहदेवविजयराज्ये श्रीखरतरगच्छे योगीन्द्रयुगप्रधान-वसतिवासिश्रीजिनदत्तसूरीणां शिष्येण ब्रह्मचन्द्रगणिना लिखिता ।

§ २१. **अनेकान्तजयपताकावृत्ति-टिप्पनक** [ मुनिचन्द्रसूरिकृत ] ❀ सं० ११७१ ❀

[ जेसलमेर, बृहद् भाण्डा० ]

संवत् ११७१ ज्येष्ठ वदि ४ शुक्रे लिखितं रामदेवेनेति ।

§ २२. **आगमिकवस्तुविचारसारवृत्ति** ❀ सं० ११७२ ❀ [ जेसलमेर, बृहद् भाण्डा० ]

[ रचना संवत् ११७२ यथा – ]

अणहिल्लपाटकपुरे श्रीमज्जयसिंहदेवनृपराज्ये । आशापुरवसत्यां वृत्तिस्तेनेयमारचिता ॥ ८ ॥

वर्षे शतैकादशके द्वासप्तत्यधिके नभोमासे । सितपंचम्यां सूर्ये समर्थिता वृत्तिकेयमिति ॥ ९ ॥

संवत् ११७२ । ग्रं० ८५० ।

§ २३. **शतकचूर्णि** ❀ सं० ११७५ ❀ [ जेसलमेर, बृहद् भाण्डा० ]

संवत् ११७५ वर्षे कार्तिक वदि ४ रवौ ।

§ २४. **काव्यालंकारवृत्ति** ❀ सं० ११७८ ❀ [ पाटण, सं० पा० भंडार ]

संवत् ११७८ चैत्रवदि ९ गुरौ ।

उदकानलचौरेभ्यो मूषकेभ्यस्तथैव च । रक्षणीया प्रयत्नेन एवं वदति पुस्तिका ॥

§ २५. **उत्तराध्ययनसूत्र( मूलपाठ )** ❀ सं० ११७९ ❀ [ पाटण, संघवीपाडाभाण्डा० ]

( १ ) संवत् ११७९ भाद्रपदवदि········ [ अद्येह श्री ]

( २ ) मदणहिलपाटकाभिधानराजधान्यां स्थित समस्तनिजराजावलीसमलंकृत महाराजाधिराज परमेश्वर त्रिभुवनगंड श्रीसिद्धचक्रवर्ति श्रीमज्जयसिंहदेवक-

( ३ ) ल्याण विजयराज्ये प्रवर्द्धमाने एतस्मात्परमस्वामिनः पूज्यपादद्वयप्रसादात् श्री श्री क[ र ]णे महामात्य श्रीआशुकः समस्तव्यापारन् करोतीत्येतस्मिन् काले इह

( ४ ) कर्णावल्यां श्रीकर्णेश्वरदेवभुज्यमान सुंयांतीज ग्रामनिवासी परमश्रावक प्रद्युम्न तथै-तदीयभार्या वेल्लिका च [ । ] अपरं नेमि प्रभृति समस्तगोष्ठिकैः पर-

( ५ ) त्र हेतवे निर्ज्जरार्थं च आर्ज्जिका मरुदेविगणिनी तथैतदीय चेल्लिका वालमतिगणिन्योः पठनाय उत्तराध्ययनश्रुतस्कंधो यक्षदेवपार्श्वाल्लिखाप्य प्रदत्त

( ६ ) इति । यादृशं पुस्तके दृष्टं तादृष्टं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥१॥ मंगलं महाश्रीः ॥ छ ॥ शिवमस्तु जिनशासनाय ॥ छ ॥

§ २६. **ओघनिर्युक्ति( सूत्रपाठ )** ❀ सं० ११८१ ❀ [ पाटण, संघसत्कभां० ]

।–एक्कारसहिं सएहिं अट्ठहिं अहिएहिं सम्मत्ता । ग्रंथाग्रं प्रत्येकांकतः ॥ गाथा ॥

संवत् ११८१ ज्येष्ठ वदि १३ शनौ मुनिचन्द्रसाधुना लिखितेति ॥

§ २७. अंतगडदशा ❀ सं० ११८५ ❀ [ जेसलमेर, बृहद् भाण्डा० ]

सं० ११८५ वर्षे ज्येष्ठ शुदि १२ शुक्रदिने श्रीमदणहिलप(पा)टके ले० सोढलेन लिखितं ।

§ २८. ललितविस्तराख्या चैत्यवन्दनसूत्रवृत्ति । ❀ सं० ११८५ ❀ [ पाटण, संघवीपाडा भां० ]

–इति चैत्यवंदनटीका समाप्ता ॥ कृतिः चतुर्दशशतप्रकरणकर्तुर्विरहांकस्य चित्रकूटाचलनिवासिनः कलिकालांधकारावलुप्यमानागमरत्नप्रकाशनप्रदीपस्य सुगृहीतनामधेयस्य जिनेंद्रगदितसिद्धांत-यथार्थवादिनः श्वेताम्बरकुलनभस्तलमृगांकस्य श्रीहरिभद्रसूरेः ॥

ग्रंथाग्रं अक्षर संख्यया अनुष्टुभां तु ४८२ ॥

विक्रम संवत् ११८५ प्रथमाश्विनवदि ७ सोमे पारि० लूणदेवेन स्वपरोपकाराय लिखितेति ॥

§ २९. जिनदत्ताख्यान ❀ संवत् ११८६ ❀ [ पाटण, संघसत्क भां० ]

–इति जिनदत्ताख्यानं समाप्तं ॥ संवत् ११८६ अद्येह श्रीचित्रकूटे लिखितं माणिभद्रेण यतिना यतिहेतवे साधवे वरनागाय स्वस्य च श्रेयःकारणम् । मंगलमस्तु वाचकजनानाम् ।

§ ३०. परिग्रहपरिमाणव्रतप्रकरण ❀ सं० ११८६ ❀ [ पाटण, संघसत्क भां० ]

एक्कारससु सएसुं छासीई समहिएसु वरिसाणं ।
मगसिरपंचमिसोमे लिहियमिणं परिगहपमाणं ॥ ८४ ॥

परिगहपरिमाणं समत्तं । संवत् ११८६ मार्गसिर वदि ५ सोमे लिखितमिति ॥

§ ३१. उपासकदशाचूर्णि ❀ सं० ११८६ ❀ [ जेसलमेर, बृहद् भाण्डा० ]

संवत् ११८६ अश्विन सुद ३ सोमे अद्येह श्रीमदणहिलवाड········ ।

§ ३२. दशवैकालिकसूत्रवृत्ति [ सुमतिसूरिकृत ] ❀ सं० ११८८ ❀ [ पाटण, संघवीपाडा भा० ]

लब्ध्वा मनुष्यकं जन्म ज्ञात्वा सर्वविदो मतं । प्रमादमोहसम्मूढा वैफल्यं ये नयंति हि ॥
जन्ममृत्युजराद्या···रोगशोकाद्युपद्रुते । संसारे सागरे रौद्रे ते भ्रमंति विडंबिताः ॥
ये पुनर्ज्ञान-सम्यक्त्व-चारित्रविहितादराः । भवांबुधिं समुल्लंघ्य ते यांति पदमव्ययं ॥
संवत् ११८८ मागसिरवदि ६ शुक्रे दशवैकालिक सूत्रं [ लिखितं ] ।

§ ३३. जयदेवच्छन्दःशास्त्र ❀ सं० ११९० ❀ [ जेसलमेर, बृहद् भाण्डा० ]

इति जयदेवच्छन्दसि अष्टमोऽध्यायः समाप्तः ।

संवत् ११९० मार्ग सुदि १४ सोमे दिने श्रीसर्व्वदेवाचार्यशिष्यस्य देवचंद्रस्यार्थे पं० श्रीधरेण जयदेवच्छंद(दो) मूलमलेखि ।

§ ३४. धर्मविधि ❀ सं० ११९० ❀ [ जेसलमेर, बृहद् भाण्डा० ]

संवत् ११९० पोष वदि ३ शुक्रे ।

नहं-गुं(गह ?)-रुदंकजुए काले सिरिविक्कमस्स वट्टंते । पोसासियतइयाए लिहियमिणं सुक्कवारंमि ॥

§ ३५. काव्यादर्श [ महाकविदंडीकृत ] ❀ सं० ११९० (?) ❀ [ पाटण, सं० पा० भां० ]

संवत् १९० ( ११९० ? ) द्वितीये ज्येष्ठे ९ लिखितेति माणिकक्षुल्लकेन ।

§ ३६. आवश्यकनिर्युक्ति ❀ सं० ११९१ ❀ [ पाटण, संघवीपाडाभां० ]

संवत् ११९१ फाल्गुन व(शु ?)दि १ शनौऽद्येह श्रीमदणहिलपाटके समस्तराजावलीराजमंडण महाराजाधिराज परमेश्वर सिद्धचक्रवर्ति श्रीमज्जयसिंहदेव कल्याणविजयराज्ये तस्मिन् काले प्रवर्तमाने पुस्तिका लिखितमि(ते ?)ति ॥ छ ॥ मंगलं महाश्रीः । शुभं भवतु ॥

[ पश्चादन्यहस्ताक्षरैः — ] श्रीप्राग्वाटज्ञातीय ठ० पूनड तद् भार्या तेजू तत्पुत्र ठ० मंडलिकेन··· ······ऽर्थं न्यायार्जितधनेन श्रीआवश्यकपुस्तिका गृहीता ज्ञानभांडागारे स्थापिता चेति ।

§ ३७. भवभावना [ मलधारि-हेमसूरिकृता ] ❀ सं० ११९१ ❀ [ पाटण, सं० पा० भाण्डा० ]

संवत् ११९१ वर्षे वैशाष सुदि ४ शुक्रे । मंगलं महाश्रीः ।

§ ३८. पुष्पवतीकथा-आदिप्रकरणसंग्रह ❀ सं० ११९१ ❀ [ पाटण, सं० पा० भां० ]

संवत् ११९१ वर्षे भाद्रपद शुदि ८ भौमे अद्येह धवलक्के समस्तराजावलीविराजित महाराजाधिराज परमेश्वर श्रीत्रिभुवनगंड सिद्धचक्रवर्ति श्रीजयसिंहदेव कल्याणविजयराज्ये एवं काले वर्तमाने तत्पादप्रसादात् महं श्रीगांगिल श्रीश्रीकरणादौ व्यापारान् करोति । अद्येह श्रीखेटकाधारमंडल राज० श्रीसोभनदेव प्रतिप [ चौ ] श्रीखेटकास्थानात् विनिर्गत [ ······ ] वास्तव्य पंडित वासुकेन गणिणि देवसिरियोग्य पुष्पवतीकथा लिखितमि( ते ? )ति । शुभं भवतु लेखकपाठकयोः ।

§ ३९. योगसार ❀ सं० ११९२ ❀ [ पाटण, संघवीपाडा भां० ]

श्रीजयकीर्तिसूरीणां शिष्येणामलकीर्त्तिना । लेखितं योगसाराख्यं विदा श्रीरामकीर्तिना ॥
संवत् ११९२ ज्येष्ट शुक्लपक्षे त्रयोदश्यां पंडित साल्हणेन लिखितमिदमिति ।

§ ४०. नवपदप्रकरणलघुवृत्ति ❀ सं० ११९२ ❀ [ पाटण, संघवीपाडाभां० ]

( १ ) संवत् ११९२ ज्येष्ठ सुदि······························

( २ ) ति अवंतीनाथ श्रीजयसिंघदेव कल्याण विजयराज्ये एवं काले प्रवर्तमाने । इहैव पा···ग्रामे·············

( ३ ) लिषिते साधु साध्वी श्रावक श्राविकाचरणाकृते । श्रीब्रह्माणीयगच्छे श्रीविमलाचार्य शिष्य श्रावक आवटि श···············

( ४ ) तिहइ साढदेव आंवप्रसाद आंबवीर श्रावक····यक नवपदलघुवृत्ति-पूजाष्टकपुस्तिका श्राविका वाल्हवि जसदेवि दूल्हेवि श्रीयादेवि सरली बालमत······

( ५ ) समस्त श्राविका नाणपंचमी तपकृत निर्जरार्थं च लिषापिता अर्पिता च अत्रस्थित साध्वी मीनागणि नंदागणि तस्य सिसिणी लषमी देमत·········( † )

( † ) पत्रस्य त्रुटितत्वात् पंक्तयोऽपूर्णा लब्धाः ।

§ ४१. **छन्दोऽनुशासन [ जयकीर्तिकृत ]** ❀ सं० ११९२ ❀ [जेसलमेर, बृहद् भाण्डा०]

इति जयकीर्तिकृतौ छन्दोऽनुशासन................ ।

संवत् ११९२ आषाढ शुदि १० शनौ लिखितमिदमिति ।

§ ४२. **उपदेशपदटीका [ वर्द्धमानाचार्यकृत ]** ❀ सं० ११९३ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११९३ ज्येष्ठ सुदि २ रवौ ।

§ ४३. **भगवतीवृत्ति-द्वितीयखंड** ❀ सं० ११९४ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११९४ श्रावण सुदि ६ शुक्रे लिखितं च लेखक वंदिराजेन ।

§ ४४. **प्रमाणान्तर्भाव** ❀ सं० ११९४ ❀ [जेसलमेर, बृहद् भाण्डा०]

–प्रमाणान्तर्भावः समाप्तः ।

श्रीदेवानन्दगच्छान्वयशिशिरकरे काशिभव्यारविन्दे
सूरावुद्योतनाख्ये प्रतपति तपने वादिकुमुदावलीनां ।
हा (?) राज्ये सानुभावा समभवदमला साधुकूर्चालवाणी
वंद्या विद्यारविन्दस्थितचरणयुगा सद्यशोवर्द्धनाख्या ॥
तत्पुत्रौ साधुशिष्यौ गुरुपरिचरणप्राप्त......
ज्येष्ठोऽसौ देवभद्रोऽपरलघुकवयः सद्यशोदेवनामा ।
एनाम्नुन्नाम्यमानां कतिपयरचनां बौद्धमीमांसकानां
व्यालेखिष्टां विशिष्टां निजगुरुपदवीमीप्समानौ प्रतीतां ॥

संवत् ११९४ भाद्रपद.................. ।

§ ४५. **शतकचूर्णि** ❀ सं० ११९६ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् ११९६ श्रावण वदि २ गुरौ लिखितं पारि० देवराजेन ।

§ ४६. **महावीरचरित्र** ❀ सं० ११९७ ❀ [खंभात, शान्तिनाथज्ञानभां०]

संवत् ११९७ आसोयवदि १० दिने मघानक्षत्रे शुक्रयोगे च महावीरचरितं लिखितं ।

§ ४७. **पउमचरिय** ❀ सं० ११९८ ❀ [जेसलमेर, बृहद् भाण्डा०]

सं० ११९८ कार्तिक वदि १३ महाराजाधिराजविजयराज्ये श्रीजयसिंघदेवे भृगुकच्छसमवस्थितेन लिखितेयं बिल्हणेन ।

§ ४८. **आवश्यकनिर्युक्ति** ❀ सं० ११९८ ❀ [पाटण, खेतरवसहीपाटकभां०]

समत्तं छव्विहमावस्सयं । गाथा २५०० ॥ संवत् ११९८ माघ सुदि.... भौमे पारि० मुणिचंद्रेण आवश्यकपुस्तकं समाप्तमिति ॥

§ ४९. **आवश्यकसूत्रनिर्युक्ति** ❀ सं० ११९८ ❀ [पाटण, संघवीपाडाभां०]

पञ्चक्खाणनिज्जुत्ती समत्ता । समत्तं छव्विहमावस्सयमिति । मंगलं महाश्रीः ।

संवत् ११९८ आषाढ सुदि २ गुरुदिने ॥ अद्येह श्रीसमस्तराजावलीसमलंकृत परमभट्टारक

महाराजाधिराज परमेश्वर श्रीमदर्णोराजदेव विजयकल्याणराज्ये । श्रीमद्जयमेरु अधःस्थित श्रीपृथ्वीपुरे प्रतिवसति स ॥ आर्जिका बांधुमतिस्या(तिस्तस्या अ ?)र्थे । नैगमान्वय कायस्थ पं० माढलेन आवश्यकपुस्तकोयं लिखितः । शुभं भवतु लेखकपाठकयोः ॥

§ ५०. **सांख्यसप्ततिभाष्य [ गौडपादाचार्यकृत ]** ❀ सं० १२०० ❀ [ जेसलमेर, बृहद् भाण्डा० ]

संवत् १२०० श्रावण वदि ८ गुरौ अद्येह श्रीसिद्धपुरे श्रीमूलनारायणदेवीयमठावस्थितपरमभागवत तपोधनिक श्रीऋषिमुनीन्द्रशिष्यस्य नव्यदेशरत्नाकरकौस्तुभस्य परमार्थविदः श्रीसल्हणमुनेराल्हण-[वि]नेयाज्ञया पंडितधारादित्येन सांख्यसप्ततिटीका भव्या पुस्तिका लिखिता ।

§ ५१. **प्रमालक्षण** ❀ सं० १२०१ ❀ [जेसलमेर, बृहद् भाण्डा०]

संवत् १२०१ माहवदि ८ बृहस्पति लिखितेति ।

§ ५२. **न्यायप्रवेशटीका–हारिभद्रीया** ❀ सं० १२०१ ❀ [ जेसलमेर, बृहद् भाण्डा० ]

संवत् १२०१ वर्षे माघमासीय चरमशकले तुरीयतिथौ तिमिरासहनवासरे श्रीभृगुकच्छे स्थितिमता पंडितेन यशसा सहितेन धवलेन पुस्तिकेयमलेखि ।

§ ५३. **संग्रहणीवृत्ति** ❀ सं० १२०१ ❀ [ जेसलमेर, बृहद् भाण्डा० ]

संवत् १२०१ माघवदि १४ भौमे विजयचंद्रगणियोग्या लिखितेति ।

§ ५४. **द्रव्यालंकारवृत्ति [ रामचन्द्र-गुणचन्द्रकृता ]** ❀ सं० १२०२ ❀ [ जेसलमेर, बृहद् भां० ]

–इति श्रीरामचन्द्र-गुणचन्द्रविरचितायां स्वोपज्ञद्रव्यालंकारटीकायां तृतीयोऽकंपप्रकाश इति ।
संवत् १२०२ सहजिगेन लिखि ।

§ ५५. **दानादिप्रकरणसंग्रह** ❀ सं० १२०३ ❀ [ पाटण, सं० पा० भां० ]

संवत् १२०३ पोस सुदि ३ दिने मोहिणी लिखिता पुस्तिका दूली श्रीविका निर्जरार्थे । मंगलं महाश्रीः ।

§ ५६. **काव्यकल्पलताविवेक** ❀ सं० १२०५ ❀ [ जेसलमेर, बृहद् भाण्डा० ]

समाप्तः काव्य[ कल्प ]लताविवेकाभिधानः श्रीकल्पपल्लवशेषः । संवत् १२०५ श्रावण सुदि १४ शनौ ।

§ ५७. **हैमलघुवृत्ति** ❀ सं० १२०६ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२०६ आषाढ वदि ५ सोमे (?) ।

§ ५८. **रुद्रटालंकार-टिप्पन** ❀ सं० १२०६ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२०६ आषाढ वदि ५ गुरुदिने (?) लिखितेति ।

§ ५९. **पञ्चाशकवृत्ति** ❀ सं० १२०७ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

सप्तोत्तर-सूर्यशते विक्रमसंवत्सरे त्वजयमेरौ ।
दुर्गे पल्लीभंगे त्रुटितं पुस्तकमिदमग्रहीत्तदनु ॥

अलिखत्स्वयमत्र गतं श्रीमज्जिनदत्तसूरिशिष्यलवः ।
स्थिरचन्द्राख्यो गणिरिह कर्मक्षयहेतुमात्मनः ॥

§ ६०. स्याद्यन्तप्रक्रिया ❋ सं० १२०७ ❋ [ जेसलमेर, बृहद् भाण्डागार ]

–उपाध्याय सर्वधरविरचित स्याद्यन्तप्रक्रियायां त्रिलिङ्गकाण्डश्चतुर्थः समाप्तः । संवत् १२०७ माघ सुदि २ रवौ मंगलं ।

§ ६१. संवेगरंगशाला ❋ सं० १२०७ ❋ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२०७ वर्षे ज्येष्ठ सुदि १० गुरौ अद्येह श्रीवटपद्रके दंड० श्रीवोसरि प्रतिपत्तौ संवेगरंगशालापुस्तकं लिखितमिति ।

§ ६२. वासवदत्ता ❋ सं० १२०७ ❋ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२०७ श्रावण वदि ४ सोमे रुद्रपल्लीसमावासे राजश्रीगोविन्दचन्द्रदेवविजयिराज्ये श्रीयशोधरेण श्रीआचार्याणां कृते लिखितेयं वासवदत्ता ।

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखीभवंतु लोकाः ॥

§ ६३. कातंत्रोत्तरापरनाम विद्यानंद [ व्याकरण ] ❋ सं० १२०८ ❋

[ पाटण, खेतरवसहीपाटकावस्थित भाण्डागार ]

–इति विजयानन्दविरचिते कातंत्रोत्तरे विद्यानंदापरनाम्नि तद्धितप्रकरणं समाप्तं । दिनकर[१२]-शतमिति संख्येऽष्टाधिकाब्दयुक्ते श्रीमद्गोविन्दचन्द्रदेवराज्ये जाह्नव्या दक्षिणकूले श्रीमद्विजयचन्द्रदेव वडहरदेशभुज्यमाने श्रीनामदेवदत्तजह्नपुरीदिग्विभागे पुरराहूपुरस्थिते पौषमासे षष्ठ्यां तिथौ शौरिदिने वणिक् जल्हणेनात्मजस्यार्थे तद्धितविजयानंदं लिखितमिति । यथा दृष्टं तथा लिखितं । शुभं भवतु । पं० विजयानंदकृतं कातंत्रसंबंधि कारक-समास-तद्धित-पादपंजिकायाः कातंत्रोत्तरः ॥

§ ६४. पूजाविधान ( रत्नचूडादिकथा ) ❋ सं० १२०८ ❋ [ पाटण, खेतरवसहीपाटक ]

संवत् १२०८ ज्येष्ठ सुदि ६ रवौ अद्येह श्रीमदणहिलपाटके समस्तराजावलीसमलंकृत महाराजाधिराज उमापतिवरलब्ध प्रसाद प्रौढप्रतापनिजभुजविनिर्जितरणांगणोपेत शाकंभरीभूपाल श्रीमत्कुमारपालदेवकल्याणविजयराज्ये तन्नियुक्त महामात्य श्रीमहा( ? वाहड ) देवे श्रीश्रीकरणादौ समस्तव्यापारं कुर्वत्येवं काले प्रवर्तमाने ऊमताग्रामवास्तव्य लेखकमूंजालेन पूजाविधानपुस्तिका लिखितेति । लेखक-पाठकयोः शुभं भवतु ॥

§ ६५. सत्तरीटिप्पन [ रामदेवगणिकृत ] ❋ सं० १२११ ❋ [ जेसलमेर, बृहद् भाण्डागार ]

कृतिरियं श्रीरामदेवगणेः । संवत् १२११ अश्विनि वदि १ बुधदिने पूर्वभाद्रपदनाम्नि मूलयोगे तृतीययामे पं० माणिभद्रशिष्येण यशोवीरेण पठनार्थं कर्मक्षयार्थं च लिखितं ।

## § ६६. बप्पभट्टीयचतुर्विंशतिस्तुतिवृत्ति ❀ सं० १२११ ❀ [ सुरत, हुकुममुनि ज्ञानभंडार ]

( १ ) इति चतुर्विंशतिकावृत्तिः समाप्ता ॥ छ ॥ जैनसिद्धान्ततत्त्वशतपत्रमकरंदास्वादमधुपेन देवानन्दितगच्छस्वच्छहृदयमुनिमुखमंडनेन श्वेतांबरव्रतिव्राततताराश्वेतरुचिना वाचनाचार्य पंडितगुणाकरेण इयं संसारार्णवनिमज्जमानजनपारनयनमंगिनी साहित्यविचारवैदग्ध्य हृदयोल्लासपंकजप्रबोधचन्द्रिका चतुर्विंशतिजिनानां स्तुतिवृत्तिर्लिखापितेति ॥ छ ॥

श्रीवैद्यनाथामकृतांतकस्य स्नानेन कक्षीरजकर्दमेन ।
स्वर्गायते दर्भवती सदा या तस्यां लिलेख स्थितराणकेन ॥

विक्रम संवत् १२११ पोष सुदि १४ सोमे ॥ शुभं भवतु ॥ मंगलमस्तु ॥ लेखक-पाठकयोश्च ॥ छ ॥

( २ ) शोभनस्तुतिवृत्तिप्रान्ते–

इति चतुर्विंशतिकावृत्तिः समाप्ता ॥ छ ॥ श्वेतांबरमहागच्छ महावीरप्रणीत देवानंदित-गच्छोद्योतकर वाचनाचार्य पंडि० गुणाकरगणिना चतुर्विंशतिजिनानां स्तुति वृत्ति-र्लिखापिता ॥ छ ॥

श्रीवैद्यनाथेन जिनेश्वरैश्च तपोधनैर्दर्भवती.....................
.........स्वयं पंडित राणकेन हेमंतकाले लिखिता समग्रा ॥ १ ॥

विक्रम सं० १२११ पौष वदि ८ बुधे ॥ छ ॥ शवमस्तु ॥ मंगलमस्तु ॥

## § ६७. पुष्पमाला ❀ सं० १२१२ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२१२ पोष वदि........... ।

## § ६८. उपदेशपदटीका [ वर्द्धमानाचार्यकृत ] ❀ सं० १२१२ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२१२ चैत्र सुदि १३ गुरौ अद्येह श्रीअजयमेरु दुर्गे समस्त राजावली विराजित परम-भट्टारक महाराजाधिराज श्रीविग्रहराजदेव विजयराज्ये उपदेशपदटीकाऽलेखीति ।

## § ६९. पृथ्वीचन्द्रचरित्र ❀ सं० १२१२ ❀ [ खंभात, शांतिनाथ मन्दिरभांडागार ]

संवत् १२१२ वर्षे ज्येष्ठ सुदि १४ गुरावद्येह श्रीमदणहिल्लनयर समतो ( सामन्तोपनमना- ) सेसमधिगत पंच महाशब्दवाद्यमानं चौलुक्यकुलकलिकाविकासं कर्णाटरायमानमर्दनकरं सपाद-लक्षराष्ट्रवनदहनदावानलं मालव राष्ट्रे निजाह्वया........संस्थापनकरं मूलराजपाटोद्वहनधुराधौरेयं पार्व्वतीप्रियवरलब्धप्रसादं इत्यादि समस्तराजावलीमालालंकार विराजमान श्रीकुमरपालदेव-विजयराज्ये तत्पादावाप्तप्रसादमहाप्रचंडदंडनायक श्रीवोसरि लाटदेशमंडले मही-दमनयोर-न्तराले समस्तव्यापारान् परिपन्थयतीत्येतस्मिन् काले जीणोरग्रामे [ तप ] नियम संजमस्वाध्याय-ध्यानानुरत परमभट्टारक आचार्य श्रीमदजितसिंहसूरिकृते श्रावकसोढूकेन परमश्रद्धायुक्तेन पृथ्वीचन्द्रचरित्रपुस्तकं विशुद्धबुद्धिना लिखापितं । लिखितं च पंडित मदनसिंहेनेति ॥ मंगलं महाश्रीः ॥

पश्चाल्लेखः–संवत् १४७८ वर्षे वैज्ञानिकशिरोमणिपूज्यपं०शान्तिसुन्दरगणिपादैः सर्व चित्कोश-कार्यं मंजुषसमारचनादिकमकारि । भारुकच्छकशालायां । श्रीसंघस्य शुभं भवतु चित्कोशेन । श्रीशान्तिसुन्दरगणिभिश्चित्कोशमंजुषसमारचनादि कृत्यं विदधे ॥ श्रीः ॥

[–जैनसाहित्य प्रदर्शन, प्रशस्ति सं० पृ० १६]

§ ७०. सिद्धांतोद्धार ❋ सं० १२१२ ❋ [खंभात, शान्तिनाथभाण्डागार]

सं० १२१२ आषाढ वदि १२ गुरौ लिखितेयं सिद्धांतोद्धारपुस्तिका लेखक देवप्रसादेनेति । ग्रंथाग्रं० १६७० द्वितीयखंडे ॥

§ ७१. आवश्यकनिर्युक्त्यादि-प्रकरणपुस्तिका ❋ सं० १२१३ ❋ [पाटण, संघसत्क भा०]

संवत् १२१३ वर्षे भाद्रवा शुदि १० बुधे पुस्तिकेयं लिखितेति । श्राविकाचांपलयोग्या लिखिता एषा पुस्तिका ।

उदकानलचौरेभ्यो मूषकेभ्यस्तथैव च । रक्षणीया प्रयत्नेन यस्मात्कष्टेन लिक्षितेति ॥ १ ॥

§ ७२. सुकोशलचरित्र ❋ सं० १२१३ ❋ [पाटण, खेतरवसही पाटक]

संवत् १२१३ भाद्रपद वदि ११ भौमे अद्येह......... ।

§ ७३. राक्षसकाव्यटीका ❋ सं० १२१५ ❋ [जेसलमेर, बृहद् भाण्डागार]

संवत् १२१५.................. ।

§ ७४. काव्यप्रकाश ❋ सं० १२१५ ❋ [जेसलमेर, बृहद् भाण्डागार]

–कृती राजानक-मम्मटालकयोः । सं० १२१५ अ(आ)श्विन सुदि १४ बुधे अद्येह श्रीमद-न(ण)हिलपाटके समस्तराजावलीविराजित महाराजाधिराज परमेश्वर परमभट्टारक उमापतिवर-लब्धप्रसाद प्रौढप्रताप निजभुजविक्रमरणांगणनिर्जितशाकंभरीभूपाल श्रीकुमारपालदेव कल्याण विजयराज्ये पंडितलक्ष्मीधरेण पुस्तकं लिखापितं ।

§ ७५. प्रकरणपुस्तिका ❋ सं० १२१५ ❋ [जेसलमेर, बृहद् भाण्डागार]

[(१) बोटिक निराकरण (२) वीनति आदि]

संवत् १२१५ माघ सुदि ८ बुधे ।

§ ७६. काव्यमीमांसा ❋ सं० १२१६ ❋ [जेसलमेर, बृहद् भाण्डागार]

संवत् १२१६ फाल्गुन वदि १ सोमे दिने ।

§ ७७. कविरहस्यवृत्ति ❋ सं० १२१६ ❋ [जेसलमेर, बृहद् भाण्डागार]

संवत् १२१६ चैत्र सुदि ४ सोमे श्रीअजयमेरुदुर्गे पुस्तकमिदं लिलिखे ।

§ ७८. चंद्रप्रभचरित्र [यशोदेवकृत] ❋ सं० १२१७ ❋ [जेसलमेर, बृहद् भाण्डागार]

संवत् १२१७ चैत्र वदि ९ बुधे.............. ।

## §७९. कल्पचूर्णि ❋ सं० १२१८ ❋ [पूना, राजकीय ग्रंथसंग्रह]

कल्पचूर्ण्णीं समाप्ता ॥ छ ॥ ग्रंथ १६००० अंकतोऽपि ॥ छ ॥ संवत् १२१८ वर्षे द्वि० आषाढ शुदि ५ गुरावद्येह श्रीमदणहिलपाटके समस्तराजावलीविराजित समलंकृत महाराजाधिराज परमेश्वर परमभट्टारक उमापतिवरलब्धप्रसाद महाहवसंग्रामनिर्वूढप्रतिज्ञाप्रौढ निजभुजरणांगणविनिर्ज्जितशाकंभरीभूपाल श्रीमत्कुमारपालदेव कल्याणविजयराज्ये तत्पादपद्मोपजीविमहामात्य श्रीयशोधवले श्रीश्रीकरणादौ समस्तमुद्राव्यापारान् परिपंथयति सतीत्येवं काले प्रवर्द्धमाने ॥ गंभूता चतुश्चत्वारिंशच्छतपथके देवश्री भोपलेश्वर शासनारूढभुज्यमान राजश्रीवैजलदेवेन पट्टितचाहरपल्लिग्रामे तद्वास्तव्यश्रे········साउकउ व्यव० शोभनदेवेन कल्पचूर्णिपुस्तकं पुस्तकसत्कद्रव्यं वृद्धिं नीत्वा तेनैव श्रीमज्जिनभद्राचार्य्याणामर्थे लेखक सोहडपार्श्वाल्लिखापितेति ॥ ॥

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥
सुरसरि सुरगिरि सुरतरु सुरनाहो जाव सुरालया हुंति । विउसेहि पढिज्जंतं ताव इमं पुत्थयं होउ ॥

## §८०. ओघनिर्युक्ति-पिण्डनिर्युक्ति ❋ सं० १२१९ ❋ [पाटण, सं० पा० भंडार]

–पिंडनिज्जुत्ति समत्ता ॥ छ ॥ संवत् १२१९ वर्षे श्रावण वदि ५ बुधे ॥ ठ० मुंधिगसुत पासदेवेन पुस्तिकेयं लिखितेति ॥ मंगलमस्तु ॥

## §८१. हैमव्याकरणलघुवृत्ति ❋ सं० १२२१ ❋ [पाटण, सं० पा० भंडार]

हैमव्याकरणलघुवृत्तिपंचमोऽध्यायः समाप्तः । संवत् १२२१ वर्षे माघवदि ६ बुधेऽद्येह आशा-[पह्यां ?] श्रीविद्यामठे लघुवृत्तिपुस्तिका पंडि० वयरसीहेन लेषिता ॥ शुभं भवतु लेखकपाठकयोः । मंगलं महाश्रीः ॥

## §८२. सप्ततिकाटीका [मलयगिरिकृता] ❋ सं० १२२१ ❋ [पाटण, सं० पा० भंडार]

संवत् १२२१ वर्षे चैत्र शुदि ४ बुधे । ग्रंथाग्र ३७८० ॥

## §८३. ज्ञाताधर्मकथा तथा रत्नचूडकथा ❋ सं० १२२१ ❋ [खंभात, शान्तिनाथ भंडार]

–इति रत्नचूडकथा । ग्रं० ३०८० ॥ सम्वत् १२२१ ज्येष्ठ सुदि ९ शुक्रदिने अद्येह श्रीमदणहिलपाटके महाराजाधिराज जिनशासनप्रभावक परमश्रावक श्रीकुमारपालदेवराज्ये श्रीचड्डावल्यां च श्रीकुमारपालदेवप्रसादास्पद श्रीधारावर्षनरेन्द्रराज्ये श्रीचक्रेश्वरसूरि श्रीपरमानंदसूरिप्रभूपदेशेन श्रीचड्डावल्लीपुरीवास्तव्य श्रे० पूना श्रावकेण आशाभद्र आशा पाहिणि छाहिणि राजप्रमुख मानुषसमेतेन इदं ज्ञाताधर्मकथाङ्ग-रत्नचूडकथापुस्तकं लेखितमिति शिवमस्तु । श्रीचक्रेश्वरसूरिश्रीपरमानंदसूरि-श्रीयशःप्रभसूरीणाम् ॥

## §८४. त्रिविक्रमकृत-पञ्जिकोद्योत ❋ सं० १२२१ ❋ [पाटण, संघसत्क भांडागार]

इति श्रीवर्द्धमानशिष्य श्रीत्रिविक्रमकृते पंजिकोद्योतेऽनुषङ्गपादः ॥ छ ॥ छ ॥
संवत् १२२१ ज्येष्ठ वदि २ सुक्रे लिखिता ।

§ ८५. कर्मप्रकृति [ संग्रहणीटीका ] ❀ सं० १२२२ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२२२ वर्षे...................... ।

§ ८६. चंद्रप्रभचरित्र [ हरिभद्रसूरिकृत ] ❀ सं० १२२३ ❀ [ पाटण, सं० पा० भंडार ]

ग्रंथाग्रं० । ८०३२ । छ ॥ संवत् १२२३ कार्तिक वदि ८ बुधे श्रीचंद्रप्रभस्वामिचरितं भोजदेवेन समर्थितं ॥

§ ८७. दर्शनशुद्धिप्रकरण विवरण [ देवभद्राचार्यकृत ] ❀सं० १२२४ ❀ [ पाटण, सं० पा० भंडार ]

सं० १२२४ वर्षे......शुदि २ गुरौ ।

§ ८८. स्याद्वादरत्नाकरावतारिका ❀ सं० १२२५ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२२५ वर्षे कार्तिक सुदि ७ बुधे अद्येह वटपद्रके पंडित प्रभाकरगणिनात्मार्थे रत्नाकरावतारिकापुस्तकं लिखापितमिति ।

§ ८९. ज्ञाताधर्मकथादिषडङ्गविवरण ❀ सं० १२२५ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२२५ वर्षे पौषसुदि ५ शनौ अद्येह श्रीमदणहिलपाटके समस्तराजावलीविराजित महाराजाधिराज परमेश्वर भट्टारक उमापतिवरलब्धप्रसाद प्रौढप्रताप निजभुजविक्रमरणांगणविनिर्जित शाकंभरीभूपाल श्रीमत्कुमारपालदेव कल्याणविजयराज्ये तत्पादपद्मोपजीविनि महामात्य श्रीकुमरसीहे श्रीश्रीकरणादिके समस्तमुद्राव्यापारान् परिपंथयति सति..................... ।

§ ९०. नंदीदुर्गपदव्याख्या ❀ सं० १२२६ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२२६ वर्षे द्वितीय श्रावण सुदि ३ सोमे अद्येह मंडलीवास्तव्य श्रीजाल्योधरगच्छे मोढवंशे श्रावक आसदेवसुतेन श्रे० पल्हणेन लिखिता । लिखापिता च श्रीगुणभद्रसूरिभिः ।

§ ९१. महापुरिसचरिय [ शीलाचार्यकृत ] ❀ सं० १२२७ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२२७ वर्षे मार्गसिर सुदि ११ शनौ अद्येह श्रीमदणहिलपाटके समस्तराजावलीसमलंकृत महाराजाधिराज श्रीमत्कुमारपालदेव कल्याणविजयराज्ये तत्प्रासाद महं० वाधूयेन श्रीश्रीकरणादौ समस्तमुद्राव्यापारान् परिपन्थयति विषयदंडाज्य ( व्य ? ) पथके पालाउद्रग्रामे वास्तव्य ले० आणंदेन महापुरि(रु)ष चरितपुस्तकं समर्थयति ।

§ ९२. उपदेशमालाविवरण ❀ सं० १२२७ ❀ [ पाटण, खेतरवसही पाटक ]

संवत् १२२७ अश्विन वदि ५ गुरौ लिखितं पासणागेन । उपदेशमालाविवरणं समाप्तं । सा० धणचंद्र सुत सा० वर्धमान सुत सा० लोहादेव तत्पुत्र कुलधर साहारण हेमचंद्र भ्रात्रि ( °तृ ) आसधर पुत्र रत्नसीह पासदेव कुमरसीह उभयोः सत्कं सिद्धव्याख्यावृहद्वृत्तिपुस्तकं ॥

§ ९३. योगशास्त्र-वीतरागस्तोत्र ग्रन्थयुगल ❀ सं० १२२८ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १२२८ वर्षे श्रावण शुदि १ सोमे ॥ अद्येह श्रीमदणहिलपाटके समस्तराजावली समलंकृत महाराजाधिराज परमार्हत श्रीकुमारपालदेव कल्याणविजयराज्ये तत्पादपद्मोपजीविनि

सामंत मंत्रिणि वलापद्रपथकं परिपंथयतीत्येवं काले प्रवर्तमाने श्रीप्राग्वाटवंसोद्भव ठ० कटु-कराज तत्सुत ठ० सोलाक तत्पत्नी राजुका ताभ्यां पुत्रेण जगत्सिंहनाम्ना संताणु.........
*× × × × × द्रमायातेन पं० थूलभद्रयोग्यपुस्तिका......... ।

§ ९४. श्रावकप्रतिक्रमणसूत्रवृत्ति [ पार्श्वगणिकृत ] ❁ सं० १२२८ ❁ [ पाटण, सं० पा० भंडार ]

संवत् १२२८ अश्विनि शुदि १५ बुधे श्रीमदणहिलपाटकाधिष्ठितेन *लेखक सुमतिना लिखितेयं पुस्तिका† ।

§ ९५. उत्तराध्ययनसूत्रवृत्ति ❁ सं० १२२८ ❁ [ पाटण, संघसत्कभाण्डागार ]

संवत् १२२८ वर्षे मार्गसिर सुदि ३ भौमे ।

§ ९६. हैम-उणादिसूत्र-वृत्ति ❁ सं० १२३१ ❁ [ पाटण, संघवीपाडा भं० ]

संवत् १२३१ वर्षे मार्ग सुदि ८ रवौ ले० मुंजालेन उणादिवृत्ति-पुस्तिका लिखितेति ॥ छ ॥

§ ९७. भगवतीसूत्र [ मूलपाठ ] ❁ सं० १२३१ ❁ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२३१ वर्षे वैशाख वदि एकादश्यां गुरौ अपराह्ले लेखक वणचंद्रेण लेखितेति ।

§ ९८. धर्मोत्तरटिप्पनक [ मल्लवादी-आचार्यकृत ] ❁ सं० १२३१ ❁ [ पाटण, संघसत्कभं० ]

इति धर्मोत्तरटिप्पनके श्रीमल्लवाद्याचार्यकृते तृतीयः परिच्छेदः समाप्तः ॥ मंगलं महाश्रीः ॥
संवत् १२३१ वर्षे भाद्रपदशुदि १२ रवौ अद्येह जंत्रावलिग्रामवास्तव्य व्य० दाहडसुत व्य० चाहडेन धर्मार्थं धर्मोत्तरटिप्पणकं लिखापितं ॥ जंत्रावलिग्रामवास्तव्य पं० प्रभादित्यसुत पं० जोगेश्वरेण पुस्तकं लिखितमिति ॥

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ मंगलं महाश्रीः ॥
हितं न वाच्यं अहितं न वाच्यं हिताहितं नैव च भाषणीयम् ।
कु......डको नाम कपालभिक्षुर्हितोपदेशेन बिलं प्रविष्टः ॥

§ ९९. उत्तराध्ययनसूत्र-मूलपाठ ❁ सं० १२३२ ❁ [ पाटण, संघवीपाडा भं० ]

संवत् १२३२ फाल्गुनि शुद्धि ५ सोमे ।

§ १००. शतकचूर्णि ❁ सं० १२३२ ❁ [ पाटण, खेतरवसहीभाण्डागार ]

शतकचूर्णी समाप्ता । संवत् १२३२ वर्षे चैत्र वदि ३ सोमे ।

§ १०१. उत्तराध्ययनसूत्र-मूलपाठ ❁ सं० १२३६ ❁ [ खंभात, शान्तिनाथ भांडागार ]

मंडलि समावासिय लेखक सोहिय नामेण ।
सुहिसज्जणिक वल्लभ ठक्कुर वेसट पुत्तेण ॥ १ ॥

---

* पत्रस्य त्रुटितत्वात् पंक्तिरपूर्णा ।
† अत्र मूलभूतानि पुरातनान्यक्षराणि प्रभ्रष्टय तदुपरि नवीनैरक्षरैरेषा पंक्तिर्लिखिता दृश्यते ।

संवत् वार छत्तीसए माघमास सुकिलपक्खंमि ।
तीयाए सुक्कवाराए फुड लिहिया पुत्थिया एसा ॥ २ ॥

**§१०२. उपदेशमालादि-प्रकरण-पुस्तिका** ❁ **सं० १२३७** ❁ [पाटण, संघवीपाडा भं० ]

संवत् १२३७ माघ वदि ९ सोमे ॥ पं० महादेवेन प्रकरणपुस्तिका लिखितेति ॥ छ ॥ ग्रं० १०१२ ॥

**§१०३. महावीरचरिय [ गुणचंद्रकृत ]** ❁ **सं० १२४२** ❁ [जेसलमेर, बृहद् भाण्डागार]

संवत् १२४२ कार्तिक सुदि १३ गुरौ ।

**§१०४. न्यायकन्दली [ श्रीधररचिता ]** ❁ **सं० १२४२** ❁ [पाटण, संघवीपाडा भं० ]

( १ ) न्यायकन्दली समाप्ता । सं० १२४२ फाल्गुन शुदि १ शुक्रे । ग्रं० ६००० ।

( २ )–०पदार्थप्रवेशकाख्या कृतिराचार्यपादानां ॥ ग्रंथाग्रं ७७७ ॥ छ ॥ संवत् १२४२ फाल्गुनवदि ६ गुरौ । पं० परमचंद्रगणीना [ मा ] देशमासाद्य पं० महादेवेन न्यायकंदलीवृत्तिसूत्रं समाप्तमिति ॥ छ ॥

**§१०५. प्रत्याख्यानविवरण** ❁ **सं० १२४४** ❁ [खंभात, शान्तिनाथ भाण्डागार]

संवत् १२४४ वर्षे ज्येष्ठ वदि ५ रवौ प्रत्याख्यानविवरणं लिखितमिति ॥ ठ० लक्ष्मीधरेणेति ॥

**§१०६. नेमिचरित [ भवभावनावृत्त्यन्तर्गत ]** ❁ **सं० १२४५** ❁ [जेसलमेर, बृहद् भाण्डागार]

–इति नवभवप्रतिबद्धं श्रीनेमिजिनचरिताख्यानं समाप्तं । संवत् १२४५ वर्षे चैत्र सुदि १४ रवौ चरितमिदं लिखितं* ।

**§१०७. जिनदत्ताख्यान** ❁ **सं० १२४६** ❁ [जेसलमेर, बृहद् भाण्डागार]

–जिणदत्ताख्यानकं समाप्तं । ग्रं० ७५० । संवत् १२४६ वर्षे श्रावण वदि ६ गुरावद्येह श्रीमदणहिल्लपाटके श्रावक रांवदेवेन निजपितृभ्यः श्रेयोर्थं श्रीमदरिष्टनेमिचरितं† जिनदत्तकथासमं लिखापितं पुस्तकं ।

**§१०८. पर्युषणाकल्प** ❁ **सं० १२४७** ❁ [खंभात, शांतिनाथ भंडार]

संवत् १२४७ वर्षे आषाढ सुदि ९ बुधेऽद्येह श्रीभृगुकच्छे समस्तराजावलीविराजित महाराजाधिराज उमापतिवरलब्धप्रसाद जंगमजनार्दन प्रतापचतुर्भुज श्रीमद् भीमदेव कल्याणविजयराज्ये एतत्प्रसादादवाप्त श्रीलाटदेशे निरूपितदंड श्रीसोभनदेवे अस्य निरूपणया मुद्राव्यापारे रत्नसीहप्रतिपत्तौ इह श्रीभृगुकच्छे श्रीमदाचार्य विजयसिंहसूरिपट्टोद्धरण श्रीमज्जिनशासनसमुच्चयआदेशनामृतपयःप्रपापालक अबोधजनपथिकाज्ञानश्रमपीलितकर्णपुटपेयपरममोक्षास्पदविश्रामश्रीमदाचार्य श्रीपद्मदेवसूरिशिष्याणां हेतोः परमार्थमंडपपर्यूषणाकल्प [ पुस्तिका ] पं० साजणेन लिखितेति ॥ मंगलं महाश्रीः ॥ १२०० ॥

---

* अस्मिन् पुस्तके जिनदत्ताख्यानमपि लिखितमस्ति । तत्प्रान्तभागस्थपुष्पिकालेखोऽधस्तने क्रमाङ्के द्रष्टव्यः ॥

† नेमिचरितान्तभागस्थः पुष्पिकालेख उपरितने क्रमाङ्के द्रष्टव्यः ।

§ १०९. **दशवैकालिकसूत्र [ लघु ]टीका** ❋ सं० १२४८ ❋ [ पाटण, संघसत्क भां० ]

संवत् १२४८ वर्षे श्रावण सुदि ९ सोमे । अद्येह आशापल्ल्यां दंड० श्रीअभयड प्रतिपत्तौ लघु दशवैकालिकटीका लिखिता ॥

§ ११०. **समरादित्यचरित्र [ प्राकृत ]** ❋ सं० १२५० ❋ [ जेसलमेर, बृहद् भाण्डागार ]

सं० १२५० वर्षे लिखितं । ग्रं० १०००० ।

§ १११. **योगशास्त्रवृत्ति** ❋ सं० १२५१ ❋ [ खंभात, शांतिनाथ भंडार ]

स्वस्ति श्रीविक्रमनृपतेः संवत् १२५१ वर्षे कार्तिक सुदि १२ शुक्रे रेवतीनक्षत्रे सिद्धयोगे महाराजश्रीभीमदेवविजयराज्ये अवनिवनिताप्रशस्तकस्तूरिकातिलकायमानलाटदेशालंकारिणि सकलजनमनोहारिणि विविधधार्मिकविराजमानदर्भवतीस्थाने श्रीमालवंशीय श्रे० साभानंदनेन जगदानंदनेन निर्मलतमसम्यक्त्वधरेण श्रे० देवधरेण सकलधर्मकर्मावहितेन ठ० आभड नरसिंहादि सुतसहितेन निजपुत्र जगदेव श्रेयोनिमित्तं श्रीवटपद्रकपुरप्रसिद्धप्रबुद्ध पं० केशवसुत पं०वोसरिहस्तेनाशेषविशेषज्ञानवतश्चमत्कारीदमप्रतिमप्रतापश्रीजिनशासनप्रभावकश्रीकुमारपालभूपालविधापितस्य श्रीहेमचंद्रसूरिरचितस्य श्रीयोगशास्त्रस्य वृत्तिपुस्तकं लेखितमिति ॥ मंगलं महाश्रीः । शुभं भवतु लेखक-पाठक-वाचकानामिति ॥ छ ॥

§ ११२. **योगशास्त्रविवरण [ प्रथमप्रकाशमात्र ]** ❋ सं० १२५५ ❋ [ पाटण, संघवीपाडा भं० ]

संवत् १२५५ वर्षे मार्ग शुदि १ रवौ अद्येह श्रीपत्तने श्रीदेवाचार्यवसत्यां श्रीधनेश्वरसूरीणां हेतोर्द्वादशसहस्र योगशास्त्रवृत्तिः परमश्रावक ठकुर वर्द्धमानेन सुदर्शनग्रामवास्तव्य पारि० वीशलपार्श्वात् लिखापिता ॥ छ ॥ प्रथम प्रकाशवृत्ति ग्रंथ १८०० अष्टादशशतानि ग्रंथसंख्या ॥ शिवमस्तु ॥

§ ११३. **नागानन्दनाटक [ श्रीहर्षकविकृत ]** ❋ सं० १२५८ ❋ [ पाटण, संघसत्क भंडार ]

समाप्तं चेदं नागानन्दं नाम नाटकं । संवत् १२५८ वर्षे ॥ श्रीमदणहिलपाटके ॥ मुनिचंद्रेण लोकानंदयोग्या पुस्तिका लिखिता ॥ शुभं भवतु ॥ मंगलं महाश्रीः ॥

§ ११४. **आवश्यकटिप्पन** ❋ सं० १२५८ ❋ [ पाटण, संघवीपाडाभंडार ]

संवत् १२५८ वर्षे मार्ग वदि ५ शुक्रे ।

§ ११५. **षडशीतिप्रकरणवृत्ति [ मलयगिरिकृता ]** ❋ सं० १२५८ ❋ [ पाटण, संघवीपाडा भं० ]

संवत् १२५८ वर्षे पौष वदि ५ रवावद्येह श्रीमदणहिलपाटके [ समस्त राजा- ] वलीविराजित महाराजाधिराज श्रीभीमदेवराज्ये षडशीतकवृत्तिः । मलयचंद्र (?) विरचिता ॥ ग्रंथाग्रं २००० ॥ छ ॥

§ ११६. **पंचांगीसूत्रं** ❋ सं० १२५८ ❋ [ पाटण, खेतरवसहीपाटक भं० ]

संवत् १२५८ वर्षे माघ शुदि १५ बुधे पचांगीसूत्रं भ० श्रीकल्याणरत्नसूरियोग्यं ।

§ ११७. प्रकरणपुस्तिका ❀ सं० १२५८ ❀ [ पाटण, संघसत्क भं० ]

[ पत्र ११२– ] संवत् १२५८ श्रावण शुदि ७ सोमे । श्रीमदणहिल्लपाटके श्रीहर्षपुरीयगच्छे श्रीमलधारिसत्का अजितसुंदरगणिन्या पुस्तिका लिखापिता ॥

§ ११८. उपमितिभवप्रपंचा कथा ❀ सं० १२६१ ❀ [ पाटण, तपागच्छ भाण्डागार ]

संवत् १२६१ ज्येष्ठ शुदि ४ सोमे ले० सोहडेन समाप्तेति ।

[ पश्चाल्लेखः– ] स्वस्ति श्रीविक्रमतः संवत् १२७४ वर्षे नागसारिकायां श्रीमालवंशालंकारेण वरयुवतितारसारहा[ रेण ] श्रे० छाड्ड-यशोदेवीनंदनेन निखिलविवेकिजनानंदनेन जिनवचनातिश्रावकेण श्रे० आंबूसुश्रावकेण पत्नी लक्ष्मी सुत आशापाल सहितेन ज्ञानार्थिसाधुहितेन एषा उपमितिभवप्रपंचा चरमचतुर्थखंडपुस्तिका गृहीतेति ॥ छ ॥ शुभं भवतु श्रीसंघस्य ॥ छ ॥

§ ११९. जयन्तीवृत्ति ❀ सं० १२६१ ❀ [ खंभात, शांतिनाथ भंडार ]

स्वस्ति श्रीविक्रमनरेंद्रसंवत् १२६१ वर्षे अश्विनवदि ७ रवौ पुष्यनक्षत्रे शुभयोगे श्रीमदणहिलपाटके महाराजाधिराज श्रीभीमदेवकल्याणविजयराज्ये प्रवर्त्तमाने श्रीप्राग्वाटज्ञातीय श्रेष्ठिधवल-मरूपुत्र्या ठ० नाऊश्राविकया आत्मश्रेयोर्थं पंडितमुंजालहस्तेन मुंकुशिकास्थाने जयंतीवृत्तिपुस्तकं लेखयित्वा श्रीअजितदेवसूरीणां निजभक्त्या समर्पितमिति ॥ शुभं भवतु ॥ मंगलमस्तु ॥ मंगलं महाश्रीः ॥

§ १२०. गौडवहनाम महाकाव्य ❀ सं० १२६४ ❀ [ पाटण, संघवीपाडा भं० ]

–इति गौडवहनाम महाकाव्यं समाप्तमिति ॥ राज वीसलेन आत्मार्थे लिखितमिति ॥ छ ॥ संवत् १२६४ कार्तिक शुदि पंचम्यां शुक्रदिने मूल नक्षत्रे धनस्थे चन्द्रे लिखितमिति ॥

§ १२१. सिद्धहैम अवचूर्णिका ❀ सं० १२६४ ❀ [ खंभात, शान्तिनाथमन्दिर ]

संवत् १२६४ वर्षे श्रावण शुदि ३ रवौ श्रीजयानंदसूरिशिष्येण अमरचंद्रेण आत्मयोग्या अवचूर्णिकायाः प्रथमपुस्तिका लिखिता । शुभं भवतु लेखक-पाठकयोः ॥ छ ॥

[ जैनसाहित्य-प्रदर्शन, प्र० सं० पृ० ४८ ]

§ १२२. लीलावतीकथा [ भूषणभट्टतनयकृता, प्राकृत ] ❀ सं० १२६५ ❀

[ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२६५ वर्षे पोषसुदि द्वादश्यां शनौ लीलावती नाम कथा ।

§ १२३. दशवैकालिकसूत्र ❀ सं० १२६५ ❀ [ अमदाबाद, ऊजमबाई धर्मशाला ज्ञानभंडार ]

संवत् १२६५ वर्षे ज्येष्ठ सुदि ५ रवौ ॥ मंगलं महाश्रीः ॥ द्विगुणवप्रवास्तव्य श्रीमालवंशीय आशाभ्रातृ व्यव० चेला पौत्रेण व्य० वउला भ्रातृ धांधापुत्रेण देवकुमारेण निजमातुर्धनदेवीनामिकायाः श्रेयोनिमित्तं लेखयित्वा दशवैकालिकपुस्तिका निजभगिन्यै जगसुंदरिगणिन्यै पठनार्थं प्रदत्तेति ॥

[ जैनसाहित्य प्रदर्शन, प्रशस्ति सं० पृ० ६ ]

**§ १२४. व्याकरणचतुष्कावचूरि** ❀ सं० १२७१ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

व्याकरणचतुष्कावचूर्णिकायां षष्ठः पादः । प्रथमपुस्तिका प्रमाणीकृता । संवत् १२७१ कार्तिकशुदि षष्ठ्यां शुक्रे श्रीनरचंद्रसूरीणामादेशेन पं० गुणवल्लभेन समर्थितेयं पुस्तिका । ग्रं० २८१८ ।

**§ १२५. धर्मरत्नवृत्ति** ❀ सं० १२७१ ❀ [ पाटण, तपागच्छ भाण्डागार ]

संवत् १२७१ वैशाष सुदि ८ गुरौ श्रीमति देवसिरि पूनमतिश्च । आत्मश्रेयोर्थं पुस्तिका कारिता ।

**§ १२६. संग्रहणीसूत्र [ श्रीचंद्रसूरिकृत ]** ❀ सं० [१२]७१ ❀ [ पाटण, संघवीपाडा भंडार ]

सं० [ १२ ? ] ७१ द्वि० श्रा० शु० ३ गुरौ ठ० राजडेन लिखितं ।

**§ १२७. बृहत्संग्रहणी-आदिप्रकरणपुस्तिका** ❀ सं० १२७२ ❀ [ पाटण, संघवीपाडा भं० ]

संवत् १२७२ वर्षे चैत्रवदि ८ शनौ पुस्तिकेयं लिखितेति । श्रीनाणकीय गच्छे हरीरोहवास्तव्य गोसा भग्नी पवहणि श्रीजयदेवोपाध्यायपठनार्थं प्रकरणपुस्तिका दत्ता ।

**§ १२८. लिङ्गानुशासन** ❀ सं १२७३ ❀ [ पाटण, संघस्तकभाण्डागार ]

संवत् १२७३ श्रावण वदि ८ रवौ लिंगवृत्तिपुस्तिका लिखिता ।

**§ १२९. न्यायबिन्दु-लघुधर्मोत्तरटीका** ❀ सं० १२७४ ❀ [ पाटण, संघवीपाडा भं० ]

लघुधर्मोत्तरटीका समाप्ता । शुभं भवतु । भुवनकीर्तिना धर्मोत्तरटीका लिखिता ।
सं० १२७४ लिखितं ।

**§ १३०. योगशास्त्रविवरण** ❀ सं० १२७४ ❀ [ पाटण, संघवीपाडा भं० ]

संवत् १२७४ वर्षे मार्ग वदि ८ गुरावद्येह श्रीप्रल्हादनपुरे । मंगलं महाश्रीः । शुभं भवतु लेखकपाठकयोः । शिवमस्तु ।

**§ १३१. भगवती सूत्रवृत्ति** ❀ सं० १२७४ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२७४ वर्षे प्रथम ज्येष्ठ वदि ७ शुक्रे प्रल्हादनपुरे भगवतीवृत्तिपुस्तकमलेखि ।

[ पश्चात्कालीन-पुष्पिकालेखः— ]

............कर्मसिंहपुत्रेण सा दुसाक श्रावकेण निजपितृ[ व्य ? ] सा० पाहणसिंह पुण्यार्थं श्रीजिनपद्मसूरिसुगुरूपदेशेन श्रीभगवतीवृत्तिसिद्धांतपुस्तकं संवत् १४०० वर्षे मोचायितं ।

**§ १३२. क्षेत्रसमासटीका [ सिद्धाचार्यकृत ]** ❀ सं० १२७४ ❀ [ पाटण, संघवीपाडा भं० ]

संवत् १२७४ ज्येष्ठ वदि ७ गुरौ पुस्तिका लिखिता ।

**§ १३३. कर्मविपाकटीका** ❀ सं० १२७५ ❀ [ पाटण, संघवीपाडा भं० ]

कर्मविपाकटीका समाप्ता ॥ संवत् १२७५ वर्षे श्रावण सुदि १५ भौमे । मंगलं महाश्रीः ।

**§ १३४. बृहत्संग्रहणीसूत्रादिप्रकरणपुस्तिका** ❀ **सं० १२७८** ❀ [ पाटण, खेतरवसही पाटक ]

[ प्रद्युम्नसूरिकृत गुरुगुणकुलक प्रान्ते- ] संवत् [ १२ ] ७८ वर्षे माघवदि ४ भौमे ।

**§ १३५. उपदेशमालादिप्रकरणपुस्तिका** ❀ **सं० १२७९** ❀ [ पाटण, संघवीपाडा भंडार ]

समाप्तेयं प्रकरणपुस्तिका । सर्वसंख्या ग्रं० ३२४० अ० १९ ॥ संवत् १२७९ वर्षे चैत्र वदि ३ रवौ अद्येह श्री चंद्रावत्यां श्रीसोमसिंहदेवविजयराज्ये पुस्तिकेयं समर्थिता लिषिता । मलयचंद्रेण । पत्र संख्या लिखितपत्र १९५ ॥ छ ॥

**§ १३६. उपदेशमालाविवरण** ❀ **सं० १२७९** ❀ [ पाटण, संघसत्कभाडागार ]

संवत् १२७९ वर्षे आषाढ शुदि ६ सोमे अद्येह श्रीवटपद्रके पंडि० सोहलेन ।

**§ १३७. निघण्टुशेष [ हेमचन्द्राचार्यकृत ]** ❀ **सं० १२८०** ❀ [ पाटण, संघसत्क भां० ]

संवत् १२८० वर्षे कार्त्तिकवदि [...] गुरौ निघंटुशेषपुस्तिका लिखितेति ॥ ॥ शुभं भवतु ॥ लेखकपाठकयोः ॥

[ पश्चादन्याक्षरैर्लिखिता पंक्तिः- ]

संवत् १३४३ वैशाख शुदि ६ सो० चांचलसुत भां० भीम भां० श्रीबाहड सुत भां० जगसिंह भां० खेतसिंहश्रावकैः श्रीचित्रकूटवास्तव्यैर्मूल्येनेयं पुस्तिका गृहीता ॥

**§ १३८. कादंबरीशेष ( उत्तरभाग )** ❀ **सं० १२८२** ❀ [ पाटण, खेतरवसही पाटक ]

इति बाणकविविरचितायां कादंबरीकथायां तत्सूनुविरचितः शेषः परिसमाप्तः । संवत् १२८२ वर्षे कार्तिक शुदि २ भौम दिने कादम्बरीपुनःसन्धानपुलिंद्रखंडं समाप्तं ।

**§ १३९. काव्यादर्श [ काव्यप्रकाशसंकेतात्मक, सोमेश्वरकृत ]** ❀ **सं० १२८३** ❀

[ जेसलमेर, बृहद् भां० ]

संवत् १२८३ वर्षे आषाढ वदि १२ शनौ लिखितमिति ।

**§ १४०. पंचाशकादिप्रकरणसंग्रह** ❀ **सं० १२८४** ❀ [ पाटण, संघवीपाडा भंडार ]

वोच्छेयगंडिया समत्ता ॥ संवत् १२८४ वर्षे माघ वदि ५ शुक्रे समर्थिता लिखिता पद्मचंद्रेण ।

**§ १४१. जीतकल्पचूर्णि-व्याख्या** ❀ **सं० १२८४** ❀ [ पाटण, तपागच्छ भाण्डागार ]

*संवत् १२८४ वर्षे फागुण शुदि ७ सोमे । मंगलं महाश्रीः । शुभं लेखक-पाठकयोः ।

**§ १४२. दशवैकालिकादिसूत्रपुस्तिका** ❀ **सं० १२८४** ❀ [ खंभात, शान्तिनाथ भंडार ]

संवत् १२८४ वर्षे फाल्गुनामावस्यां सोमे अद्येह श्रीमदाघाटदुर्गे समस्तराजावलीसमलंकृत-महाराजाधिराज श्रीजैत्रसिंहदेवकल्याणविजयराज्ये तन्नियुक्तमहामात्य श्रीजगत्सिंहे समस्तमुद्रा-व्यापारान् परिपंथयतीत्येवं काले प्रवर्त्तमाने सा० उद्धरसूनुना समस्तसिद्धांतोद्धारैकधुरंधरेण

---

* पुस्तकमिदं महामात्यवस्तुपाललेखितज्ञानकोषसत्कं ज्ञायते । अग्रेतनपत्रस्योपरि वस्तुपालस्तुतिरूपाणि ३-४ पद्यानि लिखितानि लभ्यन्ते । द्रष्टव्यं, पाटण जैनग्रन्थसूचि, भा० १, पृ० ४०० ।

विशुद्धसिद्धांतश्रवणसमुद्भूतप्रभूतश्रद्धातिरेकेण परमार्हत सा० हेमचंद्रेण दशवैकालिक-पाक्षिक-सूत्र-ओघनिर्युक्तिसूत्रपुस्तिका लेखिता । लिखिता च ठ० साहडसुतश्रवणोपासक ठ० महिलण-सुतखेमसिंहेन ॥ छ ॥ शिवमस्तु संघस्य ॥

**§ १४३. योगशास्त्र [ चतुर्थप्रकाशपर्यंत ] ❀ सं० १२८५ ❀ [ छाणी, श्रीविजयदानसूरि ज्ञानभंडार ]**

संवत् १२८५ वर्षे ज्येष्ठ शुदि ८ गुरौ श्रीदेवपत्तने साढलयोग्या स्वाध्यायपुस्तिका लिखिता ॥ छ ॥ मंगलं महाश्रीः ॥ छ ॥

**§ १४४. हम्मीरमदमर्दन [ नाटक ] ❀ सं० १२८६ ❀ [ जेसलमेर, बृहद् भाण्डागार ]**

( १ ) हम्मीरमदमर्दन, ( २ ) वस्तुपालप्रशस्ति, ( ३ ) वस्तुपालस्तुति ।

संवत् १२८६..................... ।

**§ १४५. गौडवधमहाकाव्य [ वाक्पतिराजकृत ] ❀ सं० १२८६ ❀ [ पाटण, संघवीपाडा भंडार ]**

संवत् १२८६ वर्षे........रवौ गौडवधनाम महाकाव्यं समाप्तमिति । कहावीढं सम्मत्तं ॥ छ ॥ गाथातः ११६८ श्लोकतः १४९० । मंगलं भवतु सर्वजगतः । तथा च लेखकपाठकाभ्यां ॥

**§ १४६. प्रकरणपुस्तिका ❀ सं० [ १२ ] ८६ ❀ [ पाटण, संघवीपा० भं० ]**

( पृ० ४७ ) श्रीश्रीमालीय दधिस्थलीवास्तव्येन विश्वलेन श्रीपद्मदेवसूरीणां कृते लिखापिता ॥

( पृ० २२७ )-संवत् ८६ वर्षे चैत्र शुदि ९ सोमे अद्येह श्रीमदनहिल......( अग्रेतनपत्रस्य नष्टत्वात् अपूर्णोऽयं पुष्पिकालेखः । )

( अन्याक्षरैः पश्चाल्लेखः– ) संवत् १३०९ वर्षे चैत्रसुदि...गुरौ प्रल्हादनपुरे चतुर्विधसंघसमक्षं श्रीपद्मप्रभदेवसूरिभिः पठनाय नलिनप्रभायाः प्रदत्तेति ॥

**§ १४७. कथारत्नकोश ❀ सं० १२८६ ❀ [ खंभात, शान्तिनाथ भंडार ]**

संवत् १२८६ वर्षे श्रावण सुदि ३ बुधेऽद्येह प्रल्हादनपुरे कथारत्नकोशपुस्तकमलेखीति भद्रमिति ।

**§ १४८. धर्मशर्माभ्युदयकाव्य [ हरिश्चन्द्रकृत ] ❀ सं० १२८७ ❀ [ पाटण, संघवीपाडा भं० ]**

संवत् १२८७ वर्षे हरिचन्द्रकविविरचितधर्म्मशर्म्माभ्युदयकाव्यपुस्तिका श्रीरत्नाकरसूरि-आदेशेन कीर्तिचन्द्रगणिना लिखितमिति भद्रं ।

**§ १४९. लिंगानुशासन [ वामनाचार्यकृत ] ❀ सं० १२८७ ❀ [ खंभात शान्तिनाथ भंडार ]**

संवत् १२८७ वर्षे वैशाखसुदि......गुरावद्येह वीजापुरीयश्रावकपोषधशालायां पूज्यश्रीदेवेंद्र-सूरि विजयचंद्रसूरि उपाध्याय श्रीदेवभद्रगणिसद्गुरूणां धर्मोपदेशतः सा० रत्नपाल सा० लाहड श्रे० वील्हण ठ० आसपाल परसूत्रपुस्तिका लिखापिता ॥

**§ १५०. कर्मस्तवटीका [ गोविंदगणिकृता ] ❀ सं० १२८८ ❀ [ पाटण, संघवीपाडा भंडार ]**

( १ ) संवत् १२८८ वर्षे पोष सुदि...गुरौ पुनर्वसु नक्षत्रे ।

लिखिता शीलचन्द्रेण टीका कर्मस्तवस्य [वै]।
गणिन्या जिनसुन्दर्या हेतवे विशदाक्षरैः ॥

(२) कर्मविपाकवृत्तिप्रान्ते–
संवत् १२८८ वर्षे [।] रवौ सुकर्मा च योगे।

**§ १५१. पंचाशकप्रकरण** ❀ सं० १२८८ ❀ [पाटण, संघवीपाडा भंडार]

संवत् १२८८ वर्षे शाके ११५४ वैशाष शुदि ९ शुक्रदिने चंद्रावत्यां लिखितं। शुभं भवतु लेखकपाठकयोः।

**§ १५२. हैमव्याकरणटिप्पनक** ❀ सं० १२८८ ❀ [पाटण, संघसत्क भां०]

संवत् १२८८ वर्षे आषाढवदि अमावास्यादिने भौमे राणकश्रीलावण्यप्रसाददेवराज्ये वटकूपके वेलाकूले प्रतीहारशाखाटप्रतिपत्तौ श्रीमदेवचंद्रसूरिशिष्येण भुवनचंद्रेण क्षुल्लकधर्म्मकीर्तिपाठयोग्या व्याकरणटिप्पनकपुस्तिका लिखितेति ॥ पं० सोमकलसेन शोधिता च ॥

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ॥
शिवतातिरस्तु श्रीजिशासनस्येति ॥

**§ १५३. ऋषभदेवचरित्र** [वर्द्धमानाचार्यविरचित] ❀ सं० १२८९ ❀ [पाटण, संघसत्क भां०]

संवत् १२८९ वर्षे माघवदि ६ भौमेऽद्येह श्रीप्रल्हादनपुरे समस्तराजावलीसमलंकृतमहाराजाधिराजश्रीसोमसिंहदेवकल्याणविजयराज्ये श्रीऋषभदेवचरित्रं पंडि० धनचंद्रेण लिखितमिति॥ मंगलं महाश्रीरिति भद्रम् ॥

**§ १५४. पिण्डनिर्युक्तिवृत्ति** [मलयगिरिकृता] ❀ सं० १२८९ ❀ [जेसलमेर, बृहद् भाण्डागार]

संवत् १२८९ वर्षे फाल्गुन शुदि ४ सोमे स्तंभतीर्थनगरनिवासी श्रीश्रीमालवंशोद्भवेन ठ० साढासुतेन ठ० कुमरसिंहेन मलयगिरिनिर्मिता सूत्रमिश्रिता पिंडनिर्युक्तिवृत्तिर्लेखयांचक्रे।

**§ १५५. दशवैकालिकसूत्र** ❀ सं० १२८९ ❀ [जेसलमेर, बृहद् भाण्डागार]

संवत् १२८९ वर्षे...... [सर्वमुपरितनलेखानुसारि; तदन्ते–] दशवैकालिकश्रुतस्कंधवृत्ति १, निर्युक्ति २, सूत्र ३ पुस्तकं लेखयांचक्रे।

**§ १५६. ओघनिर्युक्तिवृत्ति** [द्रोणाचार्यकृता] ❀ सं० १२८९ ❀ [जेसलमेर, बृहद् भाण्डागार]

[संवतादि सर्वमुपरितनलेखानुसारि। तत्पश्चात्, अन्यहस्ताक्षरैः–]
श्रीसो........पुत्र सं० पूर्णसिंह भ्रातृ सा०..........साल्हणाभ्यां मूल्येन गृहीत्वा सुगुरु श्रीतरुणप्रभसूरिपादपद्मेभ्यः प्रादायि।

**§ १५७. देववंदनकादिप्रकरणपुस्तिका** ❀ सं० १२९० ❀ [खंभात, शांतिनाथ मन्दिर]

देववंदनकं समाप्तं ॥ छ ॥ संवत् १२९० वर्षे माघ वदि १ गुरुदिने। वरहुडिया नेमड सुत साहु सहदेव पुत्र सा० षेटा गोसलेन मातृ सौभाग्यदेवी श्रेयोऽर्थं लिखापितं। शुभं भवतु लेखक-पाठकयोः॥ लिखितं वीजापुरे। लिखापितं लाहडेन। लिखितं पंडित अमलेण ॥ छ ॥

§ १५८. संग्रहणीटीका [ मलयगिरिसूरिकृता ] ❀ सं० १२९० ❀ [ पाटण, संघवीपाडा भंडार ]

इति श्रीमलयगिरिविरचिता संग्रहणीटीका समाप्ता । संवत् १२९० वर्षे माघ वदि १ रवौ पुस्तकमिदं लिखितं ।

§ १५९. धर्माभ्युदयमहाकाव्य ❀ सं० १२९० ❀ [ खंभात, शांतिनाथमंदिर भं० ]

संवत् १२९० वर्षे चैत्र सुदि ११ रवौ स्तंभतीर्थवेलाकूलमनुपालयता महं० श्रीवस्तुपालेन श्रीधर्माभ्युदयमहाकाव्यमिदमलेखि ॥ छ ॥ छ ॥ छ ॥ शुभं भवतु श्रोतृ-व्याख्यातॄणां ॥

§ १६०. नीतिवाक्यामृत [ सोमदेवसूरिकृत ] ❀ सं० १२९० ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १२९० वर्षे प्रथम श्रावण वदि १० शनावद्येह श्रीमद्देवपत्तने गंड श्रीत्रिनेत्रप्रभृतिपंचकुलप्रतिपत्तौ महं सीहाकेन नीतिवाक्यामृतसत्कपुस्तिका लिखापिता ॥ मंगलं महाश्रीः ॥ शुभं भवतु लेखक-पाठकयोः ।

§ १६१. बृहत्कल्पचूर्णि ❀ सं० १२९१ ❀ [ पाटण, संघसत्क भाण्डागार ]

संवत् १२९१ वर्षे पौष शुदि ४ सोमे ।

§ १६२. उपदेशमालाविवरण ❀ सं० १२९१ ❀ [ खंभात, शान्तिनाथ भंडार ]

ठक्कुर जैत्रसिंहस्य······पूज्य··सिंहेन निपुणेनार्पिता । संवत् १२९१ वर्षे अषाढ शुदि १३ शनौ उपदेशमालायाः पुस्तकं लिखितमिति ।

§ १६३. खंडन-खंडखाद्य [ श्रीहर्षकृत ] ❀ सं० १२९१ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२९१ वर्षे श्रावण वदि ७ बुधे पुस्तिका लिखितेति ।

§ १६४. जीतकल्पसूत्र ❀ सं० १२९२ ❀ [पाटण, खेतरवसही पाटक ]

संवत् १२९२ वर्षे माघ शुदि १ गुरौ अद्येह श्रीभृगुकच्छे श्रीमानतुंगसूरिशिष्येण पंडि० गुणचंद्रेण जीतकल्पविवरणपुस्तिका लेखयित्वा श्री अभयदेवसूरीणां प्रदत्ता ॥ शुभं भवतु ॥

§ १६५. प्रकरणपुस्तिका ❀ सं० १२९२ ❀ [ पाटण, संघवीपाडाभं० ]

संवत् १२९२ वर्षे चैत्र शुदि ५ गुरौ स्तंभतीर्थनगरनिवासिना श्रीश्रीमालवंशोद्भवेन ठ० साढासुतेन ठ० कुमरसीहेन इयं प्रकरणपुस्तिका लेखयांचक्रे ॥ छ ॥ छ ॥ मंगलं महाश्रीः ॥ शुभं भवतु ॥

§ १६६. नंदीसूत्रटीका [ मलयगिरिकृता ] ❀ सं० १२९२ ❀ [ खंभात, शान्तिनाथ भंडार ]

सं० १२९२ वर्षे वैशाख शुदि १३ अद्येह वीजापुरे श्रावकपौषधशालायां श्रीदेवभद्रगणि पं० मलयकीर्ति पं० अजितप्रभगणिप्रभृतीनां व्याख्यानतः संसारासारतां विचिंत्य सर्वज्ञोक्तशास्त्रं प्रमाणमिति मनसि ज्ञात्वा सा० धणपालसुत सा० रत्नपाल ठ० गजसुत ठ० विजयपाल श्रे० देल्हासुत श्रे० वील्हण महं० जिणदेव महं० वीकलसुत ठ० आसपाल श्रे० सोल्हा ठ० सहजा-

सुत ठ० अरसीह सा० राहडसुत सा० लाहड प्रभृतिसमस्तश्रावकैर्मोक्षफलप्रार्थकैः समस्तचतुर्विध-संघस्य पठनार्थं वाचनार्थं च समर्पणाय लिखापितं ॥ छ ॥ छ ॥

§ १६७. उपदेशमाला ❁ सं० १२९२ ❁ [ पाटण, खेतरवसही पाटक ]

संवत् १२९२ वर्षे कार्तिक वदि १४ रवावद्येह श्रीभृगुकच्छे आसदेव्या पुस्तिका लिखापितेति ॥

§ १६८. उपदेशमालाटीका [ रत्नप्रभकृता ] ❁ सं० १२९३ ❁ [ पाटण, संघवीपाडा भंडार ]

ग्रंथाग्रं० १११५० तथा सूत्रसमं ग्रंथाग्रं० ११७६४ ।

सं० १२९३ वर्षे पौष सुदि ५ गुरौ अद्येह चंद्रावत्यां लिखितं पं० मलयचंद्रेण ॥ शुभं भवतु ॥

§ १६९. प्रकरणपुस्तिका ❁ सं० १२९३ ❁ [ पाटण, संघवीपाडा भं० ]

संवत् १२९३ वर्षे भाद्रवा शुदि १० बुधे ॥ पुस्तिकेयं लिखितेति श्राविका चांपल योग्या लिखिता एष पुस्तिका ॥

§ १७०. हैमव्याकरणपुस्तिका ❁ सं० १२९३ ❁ [ खंभात, शान्तिनाथ मंदिर ]

संवत् १२९३ वर्षे अश्विन सुदि १५ सोमे स्तंभतीर्थे श्रीनरेश्वरसूरियोग्या हैमव्याकरणपुस्तिका लिखापिता ॥

§ १७१. महावीरचरित्र [ त्रिषष्टीय ] ❁ सं० १२९४ ❁ [ पाटण, संघवीपाडा भंडार ]

सं० १२९४ वर्षे चैत्र वदि ६ सोमे लिखितमिदं श्रीमहावीरचरितपुस्तकं । लेख० महिलणेनेति भद्रं । मंगलं महाश्रीः ।

§ १७२. निशीथचूर्णि [ द्वितीयखंड ] ❁ सं० १२९४ ❁ [ पूना, राजकीय ग्रंथसंग्रह ]

चुण्णी विसेसनामा निसीधस्स ॥ ॥ संवत् १२९४ वर्षे वैशाख शुदि ३ रवावद्येह स्तंभतीर्थ-निवासिना श्रीश्रीमालवंशोद्भवेन ठ० साढासुतेन ठ० कुमरसीहेन निसीथचूर्णिद्वितीयखंडपुस्तकं लेखयांचक्रे ॥

§ १७३. गणधरसार्द्धशतकवृत्ति ❁ सं० १२९५ ❁ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२९५ वर्षे श्रीधारापुरी-नलकच्छकादिकृतविहारक्रमेण सुमतिगणिना श्रीमंडपदुर्गे वृत्ति-रियं समर्थितेति ।

विदुषा जल्हणेनेदं जिनपादाम्बुजालिना । प्रस्पष्टं लिखितं शास्त्रं वंद्यं कर्मक्षयप्रदं ॥

§ १७४. कर्मविपाकटीका ❁ सं० १२९५ ❁ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १२९५ वर्षे अद्येह श्रीमन्नल[कच्छ]के समस्तराजावलीविराजित महाराजाधिराज श्रीमज्ज-यतुगिदेवकल्याणविजयराज्ये महाप्रधान पंच० श्रीधर्मदेवे सर्वमुद्राव्यापारान् परिपंथयतीत्येवं काले प्रवर्तमाने श्रीऊपकेशवंशीय सा० आसापुत्रेण श्रीचित्रकूटवास्तव्येन चारित्रिचूडामणि श्रीजिनवल्लभसूरिसंतानीय-श्रीजिनेश्वरसूरिपदपंकजमधुकरेण श्रीशत्रुञ्जयोज्जयंतादितीर्थसार्थया-त्राकरणसफलीकृतसंघमनोरथने सुगुरूपदेशश्रवणसंजातश्रद्धातिरेकप्रारब्धसिद्धांतादि समस्तजैन-

शास्त्रोद्धारोपक्रमेण अद्य सा० सल्हाकेन भ्रातृदेदासहितेन कर्मस्तव-कर्मविपाक-पुस्तिका लेखिता। पं० धरणीधरशालायां पं० चाहडेन [लिखितं ?]।

§ १७५. प्रवचनसारोद्धार (मूलपाठ) ❀ सं० १२९५ ❀ [पाटण, संघवीपाडा भंडार]

संवत् १२९५ वर्षे भाद्रपद शुद्ध ५ पंचम्यां सोमे समर्थिता ॥ छ ॥

आदर्शदोषात् मतिविभ्रमाद्वा यत्किंचिन्न्यूनं लिखितं मयात्र।
तत्सर्वमार्यैः परिशोधनीयं प्रायेण मुह्यंति हि ये लिखंति ॥

§ १७६. षड्विधावश्यकविवरण [योगशास्त्रगत] ❀ सं० १२९५ ❀ [पाटण, संघवीपा० भं०]

संवत् १२९५ वर्षे भाद्रपद शुदि ११ रवौ स्तंभतीर्थे महामंडलेश्वर राणक श्रीविसलदेवविजयराज्ये तन्नियुक्तदंडाधिपति श्रीविजयसीहप्रतिपत्तौ श्रीसंडेरगच्छीय गणि आसचंद्र शिष्य पंडित गुणाकर सौवर्णिक पल्लीवाल ज्ञाती ठ० विजयसीह ठ० सलषणदेव्योस्तनुज सो० ठ० तेजःपालेन लेखयित्वा आत्मश्रेयसे पुस्तिका प्रदत्ता ॥ छ ॥ लिखिता ठ० रतनसीहेन। मंगलमस्तु। ग्रंथाग्र १३००।

§ १७७. त्रिषष्टिशलाकापुरुषचरित्र-तृतीयपर्व ❀ सं० १२९५ ❀ [खंभात, शांतिनाथ भं०]

मंगलं महाश्रीः ॥ छ ॥ छ ॥ १२९५ वर्षे आश्विनवदि २ रवौऽद्येह श्रीवीजापुरपत्तने समस्तराजावलीपूर्वकं तपाकीय श्रीपोषधशालायां चरित्रगुणनिधानसमस्तसिद्धांतकलोन्मानेन पारगेन तपादेवभद्रगणि–मलयकीर्त्ति–पंडितकुलचंद्र–पंडि०देवकुमारमुनि–नेमिकुमारमुनिप्रभृति समस्तसाधून् तच्चरणकमलानुभक्त परमश्रावक साधु० रतनपाल समस्तसिद्धांतपुस्तकानां पौषधशालाभारनिर्वाहक परमश्रावक श्रेष्ठिवील्हण द्वितीयभारनिर्वाहक साधर्मिकानां वात्सल्यतत्पर परमश्रावक ठ० आसपाल तृतीयभारनिर्वाहक निरंतरं पुस्तकसिद्धांतनिर्विकल्पभक्त्या सारतत्पर परमश्रावक साधु० लाहडप्रभृति समस्तश्रावकैः त्रिषष्टिपुस्तकं समस्त साधु–श्रावकाणां पठनवाचनपुण्यश्रेयोर्थं लिखापितं ॥ छ ॥ छ ॥ लेखकपाठकानां शुभं भवतु ॥ छ ॥ मंगलं महाश्रीः ॥ शिवमस्तु ॥ आचंद्रार्कं अयं पुस्तकं नंदतु ॥ ॥......मंगलं महाश्रीः ॥ छ ॥ छ ॥

§ १७८. पिंडविशुद्धि ❀ सं० १२९६ ❀ [पाटण, संघवीपाडा भंडार]

संवत् १२९६ वर्षे कार्तिकवदि ६ सोमे पिंडविशुद्धिपुस्तिका लिखिता ॥ शुभं भवतु ॥

§ १७९. उपदेशकन्दलीवृत्ति [बालचन्द्रविरचित] ❀ सं० १२९६ ❀ [पाटण, संघसत्क भं०]

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥

संवत् १२९६ वर्षे फाल्गुणशुदि ९ शुक्रे समस्तराजावलिपूर्वं महाराजाधिराज श्रीभीमदेवकल्याणविजयराज्ये तन्नियुक्त महामात्य दंड० श्रीताते श्रीश्रीकरणं परिपंथयतीत्येवं काले पुस्तकमिदं लिखितमिति ॥ श्रीः ॥

§ १८०. पाक्षिकसूत्रचूर्णि-वृत्ति ❀ सं० १२९६ ❀ [खंभात, शांतिनाथ भंडार]

इति पाक्षिकप्रतिक्रमणचूर्णिवृत्ति। ग्रंथाग्र ३१०० एकत्रिंश शतानि।

संवत् १२९६ वैशाख सुदि ३ गुरौ इहैव वीजापुरे श्रीनागपुरीयश्रावकैः पौषधशालाया सिद्धांतशास्त्रं पूज्यश्रीदेवेंद्रसूरि–श्रीविजयचंद्रसूरि–उपाध्यायश्रीदेवभद्रगणेर्व्याख्यानतः संसारासारतां विचिंत्य सर्वज्ञोक्तशास्त्रं प्रमाणमिति मनसा विचिन्त्य श्रीनागपुरीय वरहूडियासंताने सा० आसदेव सुत सा० नेमड सुत सा० राहड जयदेव सा० सहदेव तत्पुत्र सा० षेढा गोसल सा० राहडसुत जिणचंद्र धणेसर लाहड देवचंद्र प्रभृतीनां चतुर्विधसंघस्य पठनार्थं वाचनार्थं च आत्मश्रेयोर्थं च लिखापितं ॥

**§ १८१. संग्रहणीटीका [ मलयगिरिकृता ] ❁ सं० १२९६ ❁ [जेसलमेर, बृहद् भाण्डागार]**

संवत् १२९६ वर्षे आसोय सुदि ३ गुरौ अद्येह राजावलीसमलंकृत महाराजाधिराज श्रीमद्भीमदेवकल्याणविजयराज्ये प्रवर्तमाने महामंडलेश्वर राणक श्रीवीरमदेव राजधानौ विद्युत्पुरस्थितेन श्री............ ।

**§ १८२. उत्तराध्ययनसूत्र ❁ सं० १२९७ ❁ [पाटण, खेतरवसही पाटक]**

संवत् १२९७ वर्षे उत्तराध्ययनपुस्तिका लिखितेति ॥

**§ १८३. हैमबृहद्वृत्ति ( तद्धितप्रकरण ) ❁ सं० १२९७ ❁ [ पाटण, तपागच्छ भाण्डागार ]**

संवत् १२९७ वर्षे कार्तिक वदि ११ रवौ तद्धितबृहद्वृत्तिपुस्तिका लिखितेति । शुभं भवतु मंगलं महाश्रीः ॥

**§ १८४. आवश्यकटिप्पनक ❁ सं० १२९७ ❁ [ खंभात, शान्तिनाथ भाण्डागार ]**

संवत् १२९७ वैशाख वर्षे मार्ग वदि १ शनिवारे आवश्यक टिप्पन पुस्तिका ठ० आसपालयोग्या ॥

**§ १८५. आवश्यकनिर्युक्ति ❁ सं० १२९७ ❁ [ पाटण, संघवीपाडा भंडार ]**

संवत् नृपविक्रम १२९७ वर्षे श्रावण शुदि ७ भौमे......... ।

**§ १८६. प्रशमरतिप्रकरणवृत्ति [ हरिभद्रकृता ] ❁ सं० १२९८ ❁ [ पाटण, संघवीपा० भं० ]**

सं० १२९८ कार्तिक शुदि १० बुधवारे प्रशमरतिपुस्तिका लिखितेति । मंगलं महाश्रीः ।

**§ १८७. भगवतीसूत्रवृत्ति ❁ सं० १२९८ ❁ [ खंभात, शान्तिनाथ भंडार ]**

ग्रंथाग्रं १८६१६ । शुभं भवतु ॥ संवत् १२९८ वर्षे मार्ग सुदि १३ सोमे अद्येह वीजापुरे सा० सहदेव सा० राहडसुत लाहडेन सा० देवचंद्रप्रभृति कुटुंबसमुदायेन चतुर्विधसंघस्य पठनार्थं वाचनार्थं च लिखापितमिति ॥

**§ १८८. आवश्यकवृत्ति ❁ सं० १२९८ ❁ [ खंभात, शान्तिनाथ भंडार ]**

सं० १२९८ फागुण सु ३ गुरौ अद्येह वीजापुरे पूज्यश्रीदेवन्द्रसूरि–श्रीविजयचन्द्रसूरिव्याख्यानतः संसारासारतां विचिन्त्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसि ज्ञात्वा सा० राहडसुत जिणचंद-धणेसर-लाहड सा० सहदेव सुत सा० षेढा संघवी गोसल प्रभृति कुटुंबसमुदायेन चतुर्विधसंघस्य पठनार्थं वाचनार्थं च लिखापितमिति ।

§ १८९. **श्रावकप्रतिक्रमणटीका** ❀ सं० १२९८ ❀ [पाटण, संघवीपाडा भंडार]

संवत् १२९८ वर्षे चैत्र वदि ३ गुरौ पुस्तिका लिषिता । शुभं ॥

§ १९०. **हैमव्याकरणान्तर्गत-तद्धितप्रकरण** ❀ सं० १२९८ ❀ [खंभात, शांतिनाथ भंडार]

संवत् १२९८ वर्षे द्वितीयभाद्रपदवदि ७ गुरौ लिखितेयं ॥ शुभं भवतु ॥ वीजापुरे पोषधशालायां तद्धितप्रथमखंडं समस्तश्रावकैर्लिखापितं ॥

§ १९१. **देशीनाममाला** [हेमचन्द्रसूरिकृता] ❀ सं० १२९८ ❀ [पाटण, संघवीपाडा भंडार]

(१) सं० १२९८ वर्षे आश्विनशुदि १० रवौ अद्येह श्रीभृगुकच्छे महाराणक श्रीवीसलदे···
(२) महं० श्रीतेजपालसुत महं० श्रील्हणसीहप्रभृति पंचकुल प्रतिपत्तौ आचार्य श्रीजिणदेव···
(३) मत्सूरिकृता देसीनाममाला लिखापिता लिखिता च कायस्थज्ञातीय महं जयतसीह सु···

§ १९२. **श्रावकप्रतिक्रमणसूत्रवृत्ति** [श्रीचन्द्रसूरिकृता] ❀ सं० १२९९ ❀ [पाटण, संघवीपाडा भंडार]

सं० १२९९ भाद्रपद शुदि १५ बुधे ॥ छ ॥

§ १९३. **हैमव्याकरणान्तर्गत-कृद्बृहद्वृत्ति** ❀ सं० १३०० ❀ [खंभात, शान्तिनाथ भंडार]

संवत् १३०० वर्षे वीजापुरपोषधशालायां समस्तश्रावकैः कृद्बृहद्वृत्तिपुस्तिका लिखापिता । सा० रत्नपाल श्रे० वील्हण० ठ० आसपाल सा० लाहडेन लिखापितं ॥

§ १९४. **शतपदिका** ❀ सं० १३०० ❀ [पाटण, संघसत्क भां०]

सं० १३०० वर्षे ज्येष्ठ सुदि ३ रवौ लिखिता ॥ ग्रंथाग्रं अंकतोऽपि ५२०० । इति शतपदिका ॥

§ १९५. **पंचांगीसूत्रवृत्ति** ❀ सं० १३०१ ❀ [खंभात, शान्तिनाथ भंडार]

संवत् १३०१ वर्षे फाल्गुण वदि १ शनौ अद्येह वीजापुरे पंचांगी सूत्रवृत्तिपुस्तकं ठ० अरसीहेण लिखितं ॥ उभय ११२८० ॥

संवत् १३०१ वर्षे फाल्गुण वदि १३ (?) शनौ इहैव प्रल्हादनपुरे श्रीनागपुरीयश्रावकेण पोषधशालायां सिद्धांतशास्त्रं पूज्यश्रीदेवेंद्रसूरि–श्रीविजयचंद्रसूरि–उपाध्यायश्रीदेवभद्रगणेर्व्याख्यानतः संसारासारतां विचिंत्य सर्वज्ञोक्तशास्त्रं प्रमाणमिति मनसा विचिंत्य श्रीनागपुरीय वरहुडियासंताने सा० आसदेव सुत साहु नेमड सुत राहड जयदेव सा० सहदेव तत्पुत्र संघ० सा० षेढा संघ० सा० गोसल० राहड सुत सा० जिणचंद्र धरणेसर लाहड देवचंद्रप्रभृतीनां चतुर्विधसंघपठनार्थं वाचनार्थं आत्मश्रेयोर्थं पंचागीसूत्रवृत्तिपुस्तकं लिखापितमिति ॥ छ ॥ छ ॥

§ १९६. **अनुयोगद्वारसूत्र (मूलपाठ)** ❀ सं० १३०१ ❀ [खंभात, शान्तिनाथ भंडार]

सं० १३०१ वर्षे आषाढ शु० १० शुक्रे धवलक्कनगरनिवासिना प्राग्वाटवंशोद्भवेन व्य० पासदेवसुतेन गंधिकश्रेष्ठिधीणाकेन बृहद्भ्रातासीद्धाश्रेयोऽर्थं सवृत्तिकमनुयोगद्वारसूत्रं लेखयांचक्रे ॥ छ ॥

§ १९७. **अनुयोगद्वारसूत्रवृत्ति [ हेमचन्द्रसूरिकृता ]** ⊛ सं० १३०१ ⊛

[ खंभात, शान्तिनाथ भंडार ]

संवत् १३०१ वर्षे आषाढ शुदि १० शुक्रे अद्येह धवलक्ककनगरनिवासिना प्राग्वाटवंशोद्भवेन व्य० पासदेवसुत गंधिक श्रे० धीणाकेन बृहद्भ्राता सीद्धाश्रेयोर्थं ससूत्रा मलधारिश्रीहेमचंद्रसूरि-विरचिता अनुयोगद्वारवृत्तिर्लेखयां चक्रे ।। मंगलं महाश्रीः ।। शुभं भवतु चतुर्विधश्रीश्रवणसंघस्य ।।छ।।

§ १९८. **आचारांगसूत्रवृत्ति** ⊛ सं० १३०३ ⊛ [ स्तंभतीर्थे, शान्तिनाथ भंडार ]

आचारनिर्युक्तिः समाप्ता । सर्वगाथा संख्या ३६७ आचारांगवृत्तिः १२३०० आचारसूत्रं २५०० । निर्युक्तिः ४४७ ।

संवत् १३०३ वर्षे मार्गवदि १२ गुरौ अद्येह श्रीमदणहिलपाटके महाराजाधिराज श्रीवीसलदेव-राज्ये महामात्य श्रीतेजःपालप्रतिपत्तौ श्रीआचारांगपुस्तकं लिखितमिति कल्याणमस्तु श्रीजिन-शासनप्रवचनाय ।। मंगलं महाश्रीः ।।

§ १९९. **योगशास्त्रादिप्रकरणपुस्तिका** ⊛ सं० १३०३ ⊛ [ पाटण, संघवीपाडा भंडार ]

संवत् १३०३ वर्षे भाद्रवा वदि १० ।

§ २००. **वीतरागस्तोत्र** ⊛ सं० १३०५ ⊛ [ पाटण, खेतरवसही पाटक ]

संवत् १३०५ वर्षे श्रावण सुदि [ ११ ] बुधे धनिष्ठानक्षत्रे शोभनयोगे समर्थिता । सा० रत्नसिं-हेन लेखितं स्तंभतीर्थपौषधशालायां ।।

§ २०१. **नैषधमहाकाव्य [ श्रीहर्षकविकृत ]** ⊛ सं० १३०५ ⊛ [ पाटण, संघवीपाडा भंडार ]

इति शशांकसंकीर्तनं नाम । संवत् १३०५ श्रा० शु० ३ शुक्रे ठ० सूंधेन नैषधमलेखि ।

§ २०२. **निर्भयभीमव्यायोग [ रामचन्द्रकविकृत ]** ⊛ सं० १३०६ ⊛

[ खंभात, शान्तिनाथ भंडार ]

संवत् १३०६ वर्षे भाद्रवा वदि ६ रवावद्येह श्रीमहाराजकुल श्रीउदयसिंहदेवकल्याणविजयराज्ये निर्भयभीमनामा व्यायोगो लिखित इति शुभं भवतु ।

§ २०३. **धातुपारायणवृत्ति [ हेमचन्द्राचार्यकृता ]** ⊛ सं० १३०७ ⊛ [ पाटण, संघवीपा० भं० ]

( १ )–समर्थितं धातुपारायणमिति । संवत् १३०७ वर्षे चैत्रवदि १२ भोमे श्रीवीसलदेवकल्याण-विजयराज्ये वाम······

( २ )······महं श्रीधांधप्रभृतिपंचकुल प्रतिपत्तौ श्रीचंद्रगच्छीय श्रीचंद्रप्रभसूरिशिष्यैः आचार्य श्रीनेमिप्रभसू··········

( ३ )·········श्रीहेमचंद्रधातुपारायणवृत्तिपुस्तिका लेखिता । लिखिता च ठ० देवश······

§ २०४. **उपदेशमालादिप्रकरणपुस्तिका** ⊛ सं १३०८ ⊛ [ खंभात, शान्तिनाथ भाण्डागार ]

संवत् १३०८ वर्षे वैशाख शुदि १४ बुधे गुणदा धारूभ्यां ( १ ) महणू पुत्रिकया आत्मश्रेयोऽर्थं प्रकरणपुस्तिका ठ० देवशर्म्मपार्श्वे लेखिता इति भद्रं ।।

**§२०५. धन्यशालिभद्रचरित्रादिपुस्तिका** ❀ सं० १३०९ ❀ [ जेसलमेर, बृहद् भांडागार ]

–सप्तमांगचूर्णिः । ग्रंथाग्रं १०१ । मेदपाटे वरग्राम वास्तव्य श्रे० अभयी श्रावक पुत्र समुद्धर श्रावकभार्यया कुलधरपुत्र्या साविति श्राविकया धन्य-शालिभद्र-कृतपुण्य [ अतिमुक्त ? ] महर्षि-चरितादिपुस्तिका स्वश्रेयोनिमित्तं लेखिता । सं० १३०९ ।

**§२०६. पाक्षिकसूत्रवृत्ति [ यशोदेवसूरिकृता ]** ❀ सं० १३०९ ❀ [ खंभात, शान्तिनाथ भंडार ]

मंगलं महाश्रीः ॥ शुभं भवतु लेखकपाठकयोः ॥ संवत् १३०९ वर्षे माघ वदि १४ सोमे । स्वस्ति श्रीमदाघाटे महाराजाधिराजभगवन्नारायणदक्षिणउत्तराधीशमानमर्दन श्रीजयतसिंहदेव-तत्पट्टविभूषणराजाश्रिते जयसिंघविजयराज्ये तत्पादपद्मोपजीविनि महं० श्रीतल्हणप्रतिपत्तौ श्रीश्रीकरणादिसमस्तव्यापारान् परिपंथयतीत्येवं काले प्रवर्त्तमाने ठ० वयजलेन पाक्षिकवृत्ति-र्लिखितेति ॥ शिवमस्तु ॥

**§२०७. धर्मरत्नप्रकरणलघुवृत्ति** ❀ सं० १३०९ ❀ [ जेसलमेर, तपागच्छ उपाश्रय भाण्डागार ]

संवत् १३०९ वर्षे ज्येष्ठ सुदि १ बुधे अद्येह धवलक्कके श्रे० सीधा सुत सहजलेन धर्मरत्नप्रकरण पुस्तिका लिखापिता ।

**§२०८. उत्तराध्ययनसूत्रगतअध्ययन** ❀ सं० १३०९ ❀ [ पाटण, संघवीपाडा भंडार ]

सं० १३०९ आषाढ वदि ''' सोमे श्रीभद्रेश्वरे वीरतिलकेन भुवनसुंदरियोग्या पुस्तिका लिखिता ।

**§२०९. उपांगपंचकवृत्ति** ❀ सं० १३१० ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३१० वर्षे गंभूकायामुपांगपंचकस्य वृत्तिर्लिखिता ॥ छ ॥ भद्रं ॥

**§२१०. हितोपदेशामृतादिप्रकरण** ❀ सं० १३१० ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १३१० वर्षे मार्गपूर्णिमायां अद्येह महाराजाधिराज श्रीविश्वलदेवकल्याणविजयराज्ये तत्पादपद्मोपजीविनि महामात्य श्रीनागडप्रभृति पंचकुलप्रतिपत्तौ एवं काले प्रवर्तमाने प्रकरण पुस्तिका साधु चंदनेन लिखितेति । लेखिता च उ० सांगाकेनेति भद्रं ।

**§२११. उत्तराध्ययनसूत्रवृत्ति** ❀ सं० १३१० ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३१० वर्षे माघशुदि १३ रवौ पुष्यार्के महाराजाधिराज श्रीवीसलदेवकल्याणविजयराज्ये महामात्य श्रीनागडमंडलेश्वर मुद्राव्यापारे अद्येह प्रल्हादनपुरस्थितेन ठ० नाग······श्रीकुमार सुत जींदडयोग्यमुत्तराध्ययनवृत्तिपुस्तकं लिखितं ॥ छ ॥ ··· ··· ···· ···· ····
व्यासतुल्योपि यो वक्ता नानाशास्त्रविशारदः । मुह्यति लिखमानस्तु किं पुनः स्वल्पबुद्धयः ॥
··· ···· ··· शुभं भवतु श्रीश्रमणसंघस्य ॥

**§२१२. आवश्यकनिर्युक्ति** ❀ सं० १३११ ❀ [ पाटण, तपागच्छ भाण्डागार ]

संवत् १३११ वर्षे लौकिक ज्येष्ठ वदि १५ रवावद्येह स्तंभतीर्थे महं श्रीकुम्वरसीह प्रतिपत्तौ संघ० वील्हणदेवियोग्या आवश्यकपुस्तिका लिखिता ॥ छ ॥ मंगलमस्तु समस्तश्रीश्रमणसंघस्य ॥ गा० २५०० ॥

**§ २१३. सार्द्धशतकवृत्ति** ❀ सं० १३१३ ❀ [ छाणी, श्रीदानविजयज्ञानभंडार ]

संवत् १३१३ वर्षे पौष सुदि ७ सोमे अद्येह आशापल्ल्यां श्रीपद्मप्रभसूरिशिष्य नैष्ठिकशिरोमणि वाचनाचार्यविनयकीर्तियोग्य सार्द्धशतकवृत्तिपुस्तिका ठ० विल्हणेन लिखिता । इति भद्रं ॥ छ ॥ शुभं भवतु लेखकपाठकयोः ॥

**§ २१४. ज्ञानपंचमीकथा [ महेश्वरसूरिकृता ]** ❀ सं० १३१३ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३१३ वर्षे चैत्र शुदि ८ रवौ महाराजाधिराज श्रीश्रीवीसलदेव कल्याणविजयिराज्ये तन्नियुक्त श्रीनागडमहामात्ये समस्त व्यापारान् परिपंथयतीत्येवं काले प्रवर्तमाने·········ज्ञान-पंचमीपुस्तिका लिखापिता ।

**§ २१५. वाराही संहिता** ❀ सं० १३१३ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३१३ वर्षे भाद्रपद वदि १५ रवौ । मंगलं महाश्रीः ।

**§ २१६. कुसुममालावृत्ति** ❀ सं० १३१३ ❀ [ पाटण, संघवीपाडा भंडार ]

ग्रंथाग्रं० १३८६८ । सं० १३१३ वर्षे आश्विन सुदि १० शनौ कुसुममालापुस्तकं समर्थितं ।

**§ २१७. हैमी नाममाला [ अभिधानचिन्तामणि ]** ❀ सं० १३१४ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३१४ संजतसिरियोग्या पुस्तिका लेखिता । [ पत्रपश्चाद्भागे-अन्याक्षरैः— ] ९०॥ पूज्य श्रीसुमेरुसुंदरिमहत्तरामिश्राणामुपदेशतः श्रीचित्रकूटमहादुर्गे गंधीमाणिक्यमहं श्रीनीडा गृहिण्या महं श्रीशृंगारदेविसुश्राविकया श्रीनाममालापुस्तिका पार्श्वस्थव्रतिनां शकाशात् गृहीत्वा तिलकप्रभागणिन्याः पठनकृते समर्पिता ॥ शुभमस्तु ॥

**§ २१८. हैमव्याकरणचतुष्क** ❀ सं० १३१५ ❀ [ पूना, राजकीयग्रंथसंग्रहालय ]

संवत् १३१५ वर्षे चैत्र वदि चतुर्थीदिने बुधवारे । स्तंभतीर्थे । पं० शीलभद्रेण । दशार्णभद्रस्य योग्या । व्याकरणचतुष्कपुस्तिका लिखिता ॥

**§ २१९. श्रावकप्रतिक्रमणसूत्रचूर्णि [ विजयसिंहसूरिकृता ]** ❀ सं० १३१७ ❀ [ पाटण, संघसत्क भां० ]

—सावगपडिक्कमणसुत्तचुन्नी समत्ता । शुभं भवतु ।

संवत् १३१७ वर्षे माहसुदि ४ आदित्यदिने श्रीमदाघाटदुर्गे महाराजाधिराजपरमेश्वरपरमभट्टारक-उमापतिवरलब्धप्रौढप्रतापसमलंकृतश्रीतेजसिंहदेवकल्याणविजयराज्ये तत्पादपद्मोपजीविनि महा-मात्य श्रीसमुद्धरे मुद्राव्यापारान् परिपंथयति श्रीमदाघाटवास्तव्य पं० रामचंद्रशिष्येण कमलचंद्रेण पुस्तिका व्यालेखि ॥

**§ २२०. भगवतीसूत्रवृत्ति** ❀ सं० १३१८ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३१८ वर्षे पौष शुदि ९ शनौ श्रीमरुकोटवास्तव्य सा० हरियडसुत सा० थिरपाल तत्त-नय······वीर नेपाभ्यां कुटुंबश्रेयसे पितृष्वसा राल्ही श्रेयोर्थं इह वामनस्थले के·····भगवती-वृत्तिपुस्तकं लिषापितं ॥

§ २२१. त्रिषष्टिशलाकाचरित्र ( सप्तमपर्व ) ❀ सं० १३१८ ❀ [ खंभात, शांतिनाथ भंडार ]

–ग्रंथाग्रंथ ३८८८ । सं० १३१८ वर्षे ज्येष्ठ शुदि २ रवावद्येह दंडा………… पति महाराजाधिराज श्रीअर्जुनदेवकल्याणविजयराज्ये तन्नियुक्तमहं श्रीसोम प्रतिपत्तौ ठक्कु० विकम्वसी…………

लेखितेयमिति ॥ यादृशं० ॥ १ ॥ शिवमस्तु सर्वजगतः ॥ मंगलं महाश्रीः ॥

§ २२२. त्रिषष्टीय-महावीरचरित्र ❀ सं० १३१९ ❀ [ जेसलमेर, बृहद् भांडागार ]

द्वियुग्माक्षीन्दुसंख्याने वर्षे श्रीसंघमध्यतः । व्याख्यानयच्च तं…श्रीमद्देवेन्द्रसूरिभिः ॥ ९ ॥ संवत् १३१९ वर्षे माघ वदि १० शुक्रे ठ० विक्रमसिंहेन पुस्तकमिदं लिखितमिति । संवत् १३४३ आषाढ सुदि १ साधु वरदेवसुतेन सकलदिग्वलयविख्यातावदातकीर्तिकौमुदी विनिर्जिताम ( ग्र ? ) चन्द्र साधु श्रीचन्द्रभ्रात्रा अमलगुणगणरत्नरोहणेन साधुमहणश्रावकेण स्वेन श्रीयुगादिदेवचरित्रादिपुस्तकं गृहीत्वा श्रीजिनचन्द्रसूरिसुगुरुभ्यः प्रदत्तं व्याख्यानाय ।

§ २२३. कथारत्नसागर [ नरचन्द्रसूरिकृत ] ❀ सं० १३१९ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३१९ वर्षे भाद्र शुदि ५ शुक्रेऽद्येह श्रीमत्पत्तने महाराजाधिराज श्रीमदर्जुनदेवविजयराज्ये तन्नियुक्त महामात्य श्रीमालदेव प्रतिपत्तौ महं० वीजाशालायां ठ० धनपालेन तरंगकथापुस्तिका लिखिता ॥ मंगलं ॥ छ ॥

§ २२४. महावीरचरित्र ( हेमचन्द्रीय ) ❀ सं० १३२४ ❀ [ खंभात, शान्तिनाथ भंडार ]

सम्वत् १३२४ वर्षे मार्ग वदि १३ रवौ अद्येह श्रीमदुज्जयिन्यां श्रीमहावीरचरित्रपुस्तकं सा० देवसिंहेन मातुःश्रेयोऽर्थं लिखापितं ॥

§ २२५. धर्मरत्नप्रकरण ❀ सं० १३२५ ❀ [ खंभात शान्तिनाथ भंडार ]

धम्मरयणपगरणं समत्तं ॥ छ ॥ ६०३ ॥ छ ॥ मंगलं महाश्रीः ॥ छ ॥ शुभं भवतु लेखक-पाठकावधारणादिसमस्तश्रावकलोकजनानां ॥ छ ॥ सं० १३२५ वर्षे माघ वदि ९ सोमेऽद्येह वीजापुरे महाराजश्रीमदर्जुनदेवकल्याणविजयराज्ये तन्नियुक्त महं० श्रीसोमप्रतिपत्तौ मालवेत्य व्य० सा० रामचंद्र सुत सा० कुम्वराकस्य पठन-श्रेयोऽर्थं स्वाध्यायपुस्तिका ठक्क० विक्रमसिंहेन लिखिता ॥ छ ॥ यादृशं…… ॥

§ २२६. दशवैकालिकसूत्रवृत्ति [ हरिभद्रसूरिकृता ] ❀ सं० १३२६ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३२६ वर्षे मार्ग शु० ४ गुरौ प्रभातेऽद्येह श्रीमदणहिल्लपाटके समस्तराजावलि-समलंकृत महाराजाधिराज श्रीमदर्जुनदेवराज्ये महामात्य श्रीमालदेवप्रतिपत्तौ श्राव०…… ……†धर्मार्थं सलषपुरेत्य ले० श्री…………†श्रीवीतरागप्र[सा]दात् श्रा० धणपाल सुश्रा० मुंजाकाभ्यां मनशुद्ध्या लिखितमिदं ॥ छ ॥

† अत्र लिपिकाराभ्यामेव कस्यचिद्दातुर्नाम लिखनार्थं रिक्तं स्थानं मुक्तमनुमीयते ।

§ २२७. वर्द्धमानस्वामिचरित ❀ सं० १३२६ ❀ [ खंभात, श्रीविजयनेमिसूरिशास्त्र भंडार ]

सं० १३२६ वर्षे श्रावण सुदि २ सोमे अद्येह धवलक्कके महाराजाधिराज श्रीमद् अर्जुनदेवकल्याण विजयराज्ये तत्पादपद्मोपजीविनि महामात्य श्रीमल्लदेवे स्तंभतीर्थनिवासिन्या पल्लीवालज्ञातीय भण० लीलादेव्या आत्मनः श्रेयोऽर्थं इदं महापुरुषचरित्रपुस्तकं लिखापितमिति । मंगलं महाश्रीः ।

शिवमस्तु सर्वजगतः परिहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥

§ २२८. नवपदप्रकरणटीका [ देवगुप्तकृता ] ❀ सं० १३२६ ❀ [ पाटण, संघवीपा० भां० ]

संवत् १३२६ वर्षे अश्वयुक् सुदि प्रतिपदायां बुधे । ग्रंथाग्रं २३०० ।

§ २२९. आचारांगसूत्र ❀ सं० १३२७ ❀ [ खंभात, शान्तिनाथ भंडार ]

संवत् १३२७ वर्षे पौषशुदि १० भौमे आचारांगपुस्तकं ठ० विक्रमसिंहेन लिखितमिदमिति ॥ मंगलमस्तु ॥

§ २३०. पाक्षिकसूत्रवृत्ति ❀ सं० १३२७ ❀ [ पाटण, संघसत्कभाण्डागार ]

संवत् १३२७ वर्षे माघ शुदि ९ बुधे । मंगलं महाश्रीः । शुभं भवतु । ग्रंथाग्रं २७०० ।

§ २३१. अभिधानचिन्तामणिनाममाला सटीका ❀ सं० १३२७ ❀ [ पाटण, संघवीपाडा भंडार ]

( १ ) संवत् १३२७ वर्षे वैशाख शुदि ५ गुरौ अद्येह

( २ ) श्रीमदणहिलपाटके महाराजाधिराज श्रीमत् अर्जुनदेव कल्याणविजयराज्ये तत्पाद-पद्मोपजीविनि महामात्य श्री गमा ( माल ? )

( ३ ) देवे प्रवर्तमाने महाराजकुमार श्रीसारंगदेवेन भुज्यमान मुद्रवव्यां महं श्रीमहीपालप्रभृति-पंचकुलप्रतिपत्तौ पूज्य परमा–

( ४ ) ······ध्य···तमोत्तम परमपूजार्चनीय श्रीनरचंद्रसूरि तत्पट्टप्रतिष्ठित प्रभुश्रीमद[न]चंद्र-सूरि तत्पट्टप्रतिष्ठित प्रभु श्रीमलय–

( ५ ) ······चरणचंचरीकेन पं० सहस्रकीर्तिना आत्मपठनार्थं अभिधानचिंतामणिनाममाला पुस्तिका लिखापिता ।

( ६ ) [ पंक्तिस्त्रुटिता । अत्रैव पुस्तकेऽन्यस्मिन् त्रुटितपत्रे– ]

( १ ) संवत् १३२७ वर्षे वैशाख शुदि

( २ ) दशम्यां महाराजाधिराज श्रीमदर्जुनदेव······विजयराज्ये मगउडिकायां स्थितेन····

( ३ ) ····य रत्नसारगणिचरणकमलोपजीविना पंडि····आत्मपठनाय लिखापिता······ ।

§ २३२. सूयगडांगवृत्ति ❀ सं० १३२७ ❀ [ खंभात, शान्तिनाथ भाण्डागार ]

सर्वसंख्याजात श्लोक १६६०० ॥ संवत् १३२७ वर्षे भाद्रपद वदि २ रवावद्येह वीजापुरे ॥

§ २३३. वासुपूज्यचरित्र [ वर्द्धमानसूरिकृत ] ❀ सं० १३२७ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १३२७ वर्षे आश्विन वदि १० बुधे श्रीमदर्जुनदेवकल्याणविजयराज्ये श्रीवासुपूज्यचरितं लिखितं।

§ २३४. दशाश्रुतस्कन्धचूर्णि ❀ सं० १३२८ ❀ [ खंभात, शान्तिनाथ भाण्डागार ]

संवत् १३२८ वर्षे आषाढ शुदि १२ गुरावद्येह षयरोडु ग्रामवास्तव्य ठ० चंडसुत ठ० लक्ष्मणेन दशाश्रुतस्कंधस्य चूर्णिर्लिखिता। मंगलं महाश्रीः॥ शुभं भवतु लेखक-पाठकयोः॥

§ २३५. संघाचारभाष्य ❀ सं० १३२९ ❀ [ जेसलमेर, बृहद् भाण्डागार ]

सं० १३२९ वर्षे पौषवदि १२ भौमे अद्येह षयरोड ग्रामवास्तव्य गूर्जर-भिन्नवालज्ञातीय ठ० चंडसुत ठ० लक्ष्मणेन लिखितं। इदं पुस्तकं पु······तिलकश्री धर्मघोषसूरीणां॥

§ २३६. उपदेशमाला [ मलधारिहेमसूरिकृता ] ❀ सं० १३२९ ❀ [ पाटण, संघवीपाडा भं० ]

श्रीमलधारिहेमसूरिविरचितोपदेशमाला समत्ता॥ सं० १३२९ वर्षे अश्विन शुदि १२ बुधेऽद्येह युवराजवाटके लिखिता॥

§ २३७. निशीथचूर्णि ( प्रथमखंड ) ❀ सं० १३३० ❀ [ पाटण, संघसत्कभाण्डागार ]

संवत् १३३० वर्षे वैशाख शुदि १४ गुरौ निशीथ प्रथमखंडचूर्णी पुस्तकं लिखितमस्ति॥

§ २३८. योगशास्त्रादिप्रकरणपुस्तिका ❀ सं० १३३० ❀ [ पाटण, संघवीपाडा भंडार ]

यदक्षरपरिभ्रष्टं मात्राहीनं च यद् भवेत्।
क्षंतव्यं तद् बुधैः सर्वं कस्य न स्खलते मनः॥

सं० १३३० वर्षे अश्विन शुदि ५ गुरौ अद्येह आशापल्ल्यां।

§ २३९. कर्मप्रकृतिवृत्ति [ मलयगिरिकृता ] ❀ सं० १३३१ ❀ [ पाटण, तपागच्छ भाण्डागार ]

संवत् १३३१ वर्षे प्रभुश्रीविजयचंद्रसूरिश्रमणोपासक साहु रत्नपाल साहु सामंतसीह आत्मश्रेयोर्थं कर्मप्रकृतिवृत्ति द्वितीयखंडं लिखापितं। वीजापुरीय पौषधशालायां। ग्रं० श्लो० ४५७७॥

§ २४०. उपदेशमालावृत्ति [ सिद्धर्षिकृता ] ❀ सं० १३३१ ❀ [ पाटण, संघसत्कभण्डार ]

०महाश्रीः। उपदेशमालाविवरणं समाप्तं। ग्रंथाग्रं ९५०० मंगलं शुभं भवतु लेखक-पाठकयोः। संवत् १३३१ वर्षे प्रथमज्येष्ठवदि १५ शनौ महं० अरिसिंह पुस्तकं लिखितम्॥

§ २४१. उपदेशमालादिप्रकरणपुस्तिका ❀ सं० १३३२ ❀ [ पाटण, वाडीपार्श्वनाथ भाण्डा० ]

संवत् १३३२ माघवदि···शनौ श्रीभर्तृपुरीयगच्छे ईश्वरसूरिशिष्य पं० नरचन्द्रेण गृहीता पुस्तिका॥

§ २४२. अनुयोगद्वारचूर्णि ❀ सं० १३३३ ❀ [ खंभात, शान्तिनाथमन्दिर ]

संवत् १३३३ वर्षे चैत्र सुदि ११ बुधे अद्येह धवलकके।

—जैनसाहित्यप्रदर्शन, प्र. सं. पृ. ४८।

§ २४३. कल्पसूत्रचूर्णि ❋ सं० १३३४ ❋ [ पूना, राजकीयग्रंथसंग्रह ]

संवत् १३३४ वर्षे मार्ग्ग शुदि १३ गुरौ। कल्पचूर्णी समाप्ता शुभं भवतु सर्वजगतः ॥

§ २४४. शतकटिप्पनक ❋ सं० १३३४ ❋ [ अमदाबाद, ऊजमबाई धर्मशाला भंडार ]

इति श्रीसिताम्बर श्रीमुनिचंद्रसूरिविरचितं शतकटिप्पनकं समाप्तं ॥

प्रत्यक्षरं निरूप्यास्य ग्रन्थमानं विनिश्चितं।
शतानि नवपंचाशदधिका पंचभिस्तथा ॥ ग्रंथाग्र ९५५ ॥

यदक्षरं परिभ्रष्टं मात्राहीनं च यद् भवेत्।
क्षंतव्यं तद् बुधैः सर्वं कस्य न स्खलते मनः ॥

संवत् १३३४ वर्षे द्वि० फागुण वदि ११ शनावद्येह श्रीमत्पत्तने महाराज श्रीसारंगदेवराज्ये श्रीसंघेन शतकटिप्पनकं लिखापितं। ठ० लाषणेन लिखितं ॥

§ २४५. उपदेशमालादिप्रकरणपुस्तिका ❋ सं० १३३४ ❋ [ पाटण, संघसत्क भां० ]

संवत् १३३४ वर्षे भाद्रवा शुदि १ शनौऽद्येह श्रीदेवपत्तने सकलराजावलीपूर्वं परमपाशुपताचार्य महामहत्तर पंडित गंडप्रवर बृहस्पति अग्रा० पारि महं श्रीअभयसीहप्रभृति-प्रतिपत्तौ उसवालज्ञातीय साहु० भावड तत्पुत्र साहु धेनसर तत्पुत्र गुणधरेण पितृभगिनीपुण्यार्थं प्रकरणपुस्तिका लिखापिता ॥ मंगलं महाश्रीः ॥

§ २४६. कल्पसूत्र ❋ सं० १३३५ ❋ [ पाटण, संघवीपाडा भंडार ]

सं० १३३५ वर्षे आषाढ सुदि···गुरौ प्रह्लादनपुरे लिखितः।

§ २४७. द्व्याश्रयमहाकाव्य [ हेमचन्द्रसूरिकृत ] ❋ सं० १३३५ ❋ [ पाटण, संघवीपाडा भं० ]

इत्याचार्य श्रीहेमचंद्रकृतौ चौलुक्यवंशे द्व्याश्रयमहाकाव्यं विंशः सर्गः ॥ छ ॥ क्षेमं भूयात् श्रीश्रमणसंघस्य ॥ छ ॥

संवत् १३३५ वर्षे श्रावण शुदि १५ सोमेऽद्येह श्रीपत्तने श्रीसारंद(ग)देवराज्ये द्व्याश्रयमहाकाव्यं ठ० लाषणेन लिखितं ॥

§ २४८. कल्पसूत्र ❋ सं० १३३६ ❋ [ पाटण, संघसत्क भाण्डागार ]

( १ ) संवत् १३३६ वर्षे ज्येष्ठ शुदि ५ रवौ श्रीअणहिल्लपुरे महाराजश्रीसारंगदेवस्य विजयराज्ये लिखितं शुभमस्तु श्रीसंघभट्टारकस्य।

( २ ) कालिकाचार्यकथाप्रान्ते पुनः—

संवत् १३३६ वर्षे ज्येष्ठ शुदि ५ रवौ श्रीपत्तने महाराजाधिराजस्य श्रीसारंगदेवस्य विजयिनि राज्ये श्रीमत्पर्यूषणाकल्पोऽयं लिखितः ॥ शुभं भवतु श्रीचतुर्विधसंघभट्टारकस्य। मंगलं महाश्रीः। श्रे० वील्हणेन मातृमोहिणिश्रेयोऽर्थं श्रीपर्यूषणाकल्पपुस्तिका लिखापिता।······प्रदत्ता पूज्यश्रीदेवसूरिभ्यः।

§ २४९. कथासंग्रहपुस्तिका ❀ सं० १३३९ ❀ [पाटण, संघवीपाडा भंडार]

संवत् १३३९ वर्षे द्वितीय कार्तिक व० [ ] भौ० ।

§ २५०. आदिनाथचरित्र [वर्द्धमानाचार्यकृत] ❀ सं० १३३९ ❀ [जेसलमेर, बृहद् भांडा०]

सं० १३३९ वर्षे लौकिक आषाढ सुदि प्रतिपद्दिने रवौ पुष्यार्के दिकूलंकषकीर्तिकल्लोलिनी-जलधि श्रीमहाराजाधिराज श्रीमत्सारंगदेव कल्याणविजयिनि तत्पादपद्मोपजीविनि महामात्य श्रीकान्हे समस्तश्री……चतुचतुरोत्तरमंडलकिरणव्यवस्थितबदरसिद्धिस्थानस्थितेन श्रीप्राग्वाट ज्ञातीय ठ० हीराकेन बृहत् श्रीयुगादिदेवचरितपुस्तकं लिखापितं । [अन्यहस्ताक्षरैः पश्चाल्लिपिः—] श्रीआदिनाथदेवप्राकृतचरित्रपुस्तकं नवलक्षकुलोद्भवेन सा० जीवड सुश्रावकेण द्रव्येण गृहीत्वा श्रीखरतरगच्छे प्रदत्तं । नवांगीवृत्तिकार श्रीअभयदेवसूरिशिष्यैः श्रीवर्द्धमानसूरिभिः कृतः ।

§ २५१. चतुष्कवृत्तिसाधनिका ❀ सं० १३४० ❀ [पूना, राजकीयग्रंथसंग्रह, की० री० पृ० ४५]

॥ सं० १३४० वर्षे ज्येष्ठ शुदि ५ रवौ श्रीदर्भावत्यां परीक्षिधीणाकेन दत्तोपाध्याय पं० पद्मचंद्रेण पुस्तिका लिखिता ॥ ४ ॥ छ ॥

संवत् १३९३ श्रीजिनकुशलसूरिशिष्य श्रीजिनपद्मसूरिसुगुरूपदेशेन सा० केला…वकपुत्ररत्नेन सा० किरता सुश्रावकेण सत्पुत्र सा० विजमल सा० कर्म्मसिंह पौत्रजयसिंह प्रमुखसारपरिवारेण अनेकपुस्तिका मूल्येन गृह्णता स्वभगिनीनायकसुश्राविकापुण्यार्थं चतुष्कवृत्तिसाधनिका पुस्तिका मूल्येन गृहीता ॥ वाच्यमाना नंदतात् आचंद्रार्कं ॥

§ २५२. उत्तराध्ययनसूत्र ❀ सं० १३४२ ❀ [पूना, राजकीयग्रंथसंग्रह, की० री० पृ० ५]

संवत् १३४२ वर्षे वैशाष वदि… दिने उत्तराध्ययनपुस्तं…………चंद्रेण लिखितं ॥

§ २५३. न्यायकुसुमाञ्जलिनिबन्ध [पं० वामेश्वरध्वजकृत] ❀ सं० १३४२ ❀ [पाटण, संघवीपाडा भंडागार]

स्वस्ति । परमभट्टारक परमेश्वर परमशैव सत्प्रक्रियोपेत महारायि राजाधिराज महासामन्ताधिपतिः राजा श्रीयुवराजदेव संभुज्यमान चौसा नगरावस्थिते । महामहोपाध्यायमिश्र शूलपाणि सुत उपाध्याय श्रीमहादेवस्य पाठार्थं । तीरभुक्ति सं । कर्णकुलालंकार ठकुर श्रीमाधवेन लिखितमिदं । यथादृष्टं तथा लिखितमिदं । गत विक्रमादित्य संवत् १३४२ । भाद्र शुदि ४ दिने । शुभं भवतु ॥

§ २५४. उत्तराध्ययनवृत्ति [शान्त्याचार्यकृता] ❀ सं० १३४३ ❀ [पाटण, संघसत्क भां०]

संवत् १३४३ वर्षे लौकिककार्तिक शुदि २ रवावद्येह श्रीमदणहिलपाटके समस्तराजावलीसमलंकृतमहाराजाधिराज श्रीमत् सारंगदेवकल्याणविजयराज्ये तन्नियुक्तमहामात्य श्रीमधुसूदने श्रीश्रीकरणादिसमस्तमुद्राव्यापारान् परिपंथयति सतीत्येवं काले प्रवर्तमाने तेनैव नियुक्तमहं श्रीसोमप्रतिपत्तौ बीजापुरे पुस्तकमिदं लेखक सीहाकेन लिखितमिति ॥ मंगलं महाश्रीः ॥ श्रीश्रीमालवंशे श्रे० बूटडीसुत श्रे० तेजाश्रेयोऽर्थं ॥

§ २५५. आगमिकवस्तुविचारसारवृत्ति ❀ सं० १३४३ ❀ [पाटण, संघवीपाडा भंडार]

संवत् १२८८ वर्षे......शुभं।

[पश्चाल्लेखः–] संवत् १३४३ वर्षे वैशाष शुदि [ ३ ] बुधे वडपद्राग्रामे शांतिनाथगौष्ठिक श्रे० वाहडी सुत खीमाकेन निजभार्या जासलश्रेयसे कर्मस्तववृत्तिपुस्तिका श्रीललितप्रभसूरीणां प्रदत्ता ॥

§ २५६. विक्रमांककाव्यादि ❀ सं० १३४३ ❀ [जेसलमेर, बृहद् भाण्डागार]

संवत् १३४३ वैशाख सुदि ६ सोमे धांधलसुत भां० भीम भां० छाहडसुत भां० जगसिंह भां० खेतसिंह सुश्रावकैः श्रीचित्रकूटवास्तव्यैर्मूल्येनेयं पुस्तिका पुनर्गृहीता।

§ २५७. कर्मविपाकस्तववृत्तिपुस्तिका ❀ सं० १३४३ ❀ [पाटण, संघवीपाडा भंडार]

संवत् १३४३ वर्षे वैशाख सुदि...बुधे वडपद्राग्रामे शांतिनाथगौष्ठिक श्रे० बाहड सुत खीमाकेन निजभार्या जासल श्रेयसे कर्मस्तववृत्तिपुस्तिका श्रीललितप्रभसूरीणां प्रदत्ता।

§ २५८. मुनिसुव्रतचरित्र [ पद्मप्रभकृत ] ❀ सं० १३४३ ❀ [जेसलमेर, बृहद् भाण्डागार]

संवत् १३४३ आषाढ सुदि १ साधु वरदेवसुत दिग्वलयविख्यातकीर्तिकौमुदीविनिर्जित आस (?) चन्द्र साधुहरचंद्र भ्राता......

§ २५९. दमयन्तीकथा ( चम्पू ) ❀ सं० १३४४ ❀ [पाटण, संघसत्क भाण्डागार]

श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां सप्तम उच्छ्वासः समाप्तः ॥

स्वस्ति श्रीनृपविक्रमेण सततं पात्रप्रदानोदका-
मंदादेशवितीर्यमाणभुजसद्भावेन विद्याविदा।
उद्दाम्नाहितहस्तिसिंहतरसा निष्पादितानां पुरा
वर्षाणामखिलत्रयोदशशती संख्याव्यतिक्रांतितः ॥ १ ॥

चतुरधिकितचत्वारिंशवर्षेऽब्जयुक्ते तदनु महति मासे शुक्लपक्षेऽजिताह्नि।
गुरुवरमगवारे स्वातिधिष्ण्ये तुलास्थे शशिनि गिरिशयोगे वर्तमाने बवे च ॥ २ ॥
मरालवारस्फुटवृत्तयुक्तां सल्लक्षणामंह्रिविभागसीम्नि।
सालंकृतिं शब्दविचारणायां नलोपनीतक्रियया सुशोभां ॥ ३ ॥
सिद्धेश्वरो नागरविप्रवर्यस्तदात्मजः पंडितसाल्हणोऽस्ति।
तदंगजः पंडितलिम्बदेवो भैमीं लिखित्वा स तदा समाप ॥ ४ ॥
श्रीपरमस्वरूपिणो भगवदधोक्षजस्य महाप्रसादोऽस्तु। लेखकस्येति भद्रं।
सदा यया व्याप्तमिदं जगत्त्रयं सरस्वती सा भवतु प्रसन्ना।
कवेरिवेयं समचित्तमोदि कवेरिवेयं मम चित्तमोदि ॥ ५ ॥
नवीनकाव्यामृतदानशिक्षिता। शिवमस्तु सर्वतः ॥

§ २६०. कल्पसूत्रपुस्तिका ❀ सं० १३४४ ❀ [पाटण, संघसत्क भाण्डागार]

संवत् १३४४ वर्षे वैशाख शुदौ अक्षयतृतीयां सोमे पर्युषणा कल्पपुस्तिका लिखिता।

**§ २६१. व्यवहारसूत्रटीका ( प्रथमोद्देशक ) ❀ सं० १३४४ ❀ [ पूना, राजकीयग्रंथसंग्रह ]**

श्रीमलयगिरिविरचितायां व्यवहारटीकायां प्रथम उद्देशः समाप्तः ॥ सपीठिके प्रथमोद्देशके ग्रं० १०८७८ ॥ संव० १३४४ वर्षे अश्विन शु० ५ साकंभरीदेशे सिंहपुर्यां मथुरान्वये कायस्थ पंडि० सांगदेवेन लिखितमिति ।

पोडवालान्वये सा० गोगा संताने सा० सपून पुत्र सा० दुर्लभ आहड धनचंद्र वीरचंद्र तत्पुत्र सा० मोल्हा सा० जाहड सा० हेमसिंह पेढा प्रभृतीनां तत्पुत्र सा० हूलण देवचंद्र कुमारपाल प्रमुखाणां पुस्तकमिदं ।

सं० १३४४ श्रीकम्ह (न्ह?) रिसि संताने श्रीपद्मचंद्रोपाध्यायशिष्य·········सिंहस्य श्रेयसे श्रीव्यवहारसिद्धांतस्य पुस्तकत्रयं सा० हूलणेन स्वपितृव्यभक्तिमता लिखापितं । यावचंद्रदिवाकरौ शिरि (?) गुरुर्यावच्च······

[ अन्याक्षरैः पश्चाल्लेखः— ]

संवत् १४५१ वर्षे सा० पेतसिंहपुत्रिकया माल्हकुलकमलराजमराल सा० झांझण नंदनोत्तम सत्कर्म्माकर सा० क············कर्म्मादेविश्राविकया श्रीव्यवहारसिद्धांतपुस्तकं स्वकीयशुल्कस्वापतेयेन गृहीत्वा सुविचार श्रीखरतरगच्छे सुगुरु श्रीजिनराजसूरीणां समुपाहारितं वाच्यमानं चिरं नंदतात् ॥ शुभं भवतु ॥

**§ २६२. उपदेशमालादिप्रकरणपुस्तिका ❀ सं० १३४५ ❀ [ जेसलमेर, बृहद् भाण्डागार ]**

—सं० १३४५ वर्षे आषाढ वदि ९ भौमे पंडि० सावदेवेन······ ।

**§ २६३. कथासंग्रह ❀ सं० १३४५ ❀ [ पाटण, संघवीपाडा भंडार ]**

खड्गकुमारकथानकं । ग्रंथाग्र १३५३ । शिवमस्तु सर्वजगतः । संवत् १३४५ श्रावण शुदि १० गुरौ मं० रत्नेन [ लिखितं ] ॥

**§ २६४. स्थानाङ्गसूत्रटीका ❀ सं० १३४६ ❀ [ पाटण, संघवीपाडा भंडार ]**

ग्रंथाग्रं श्लोकाः १४२५ ॥ छ ॥ छ ॥ छ ॥ संवत् १३४६ वर्षे ज्येष्ठ सुदि १५ गुरावद्येह वीजापुरे महाराजाधिराज श्रीसारंगदेव प्रतिबद्ध महं श्रीमुंजालदेव नियुक्त महं० श्रीसांगा प्रतिपत्तौ पुस्तकमिदं लिखितं ॥ यादृशं० । मंगलं महाश्री ।

[ अन्याक्षरैः पश्चाल्लेखः— ]······वास्तव्य मोढ ज्ञातीय व्य० जसरासुत श्रे० जाल्हा तत्सुत श्रे० ऊदाश्रेयोऽर्थं ठाणांग वृत्ति पुस्तकं लिखापितं । श्रे० ऊदापुत्र श्रे० छाडउ भ्रातृ देपाल जयतल वील्हणा ।

**§ २६५. तत्त्वोपप्लव [ जयराशिभट्टकृत ] ❀ सं० १३४९ ❀ [ पाटण, संघवीपाडा भंडार ]**

सं० १३४९ वर्षे मार्ग वदि ११ शनौ धवलकके महं० नरपालेन तत्त्वोपप्लवग्रंथपुस्तिका लेखीति ॥ भद्रं ॥

**§ २६६. समवायांगसूत्रवृत्ति ❀ सं० १३४९ ❀ [ खंभात, शान्तिनाथ मंदिर भं० ]**

संवत् १३४९ वर्षे माघ सुदि १३ अद्येह दयावटे श्रेष्ठि होना श्रेष्ठि कुमरसिंह श्रे० सोमप्रभृति समवायसमारब्धपुस्तकभांडागारे ले० सिंहाकेन समवायवृत्तिपुस्तकं लिखितं ॥ छ ॥

§ २६७. अनेकांतजयपताकावृत्ति ❁ सं० १३५१ ❁ [ खंभात, श्रीविजयनेमिसूरिशास्त्रभंडार ]

सा० वरदेवकुलकमलमार्तंड स्वगुर्वर्चितमाणिक्यालंकृतोत्तमांग सा० विमलचंद्र श्रावकरत्न सुतोत्तमाभ्यां श्रीस्वर्णगिरिशिखरालंकार श्रीचंद्रप्रभ–श्रीयुगादिदेव–श्रीनेमिनाथप्रासादविधापन-श्रीशत्रुंजयोज्जयन्तादि महातीर्थ सर्वसंघ यात्राकारापण उपार्जित पुण्यप्रासाद रोपित कलशध्व-जाभ्यां सा० क्षेमसिंह सा० चाहडसुश्रावकाभ्यां स्वश्रेयसे सं० १३५१ माघ वदि प्रतिपदि श्रीजिनप्रबोधसूरिपट्टोदयालंकार श्रीजिनचंद्रसूरिसुगुरु उपदेशेन श्रीप्रल्हादनपुरे व्याप्त-त्रैलोक्यतलमिथ्यात्वमहीपतिविजयप्राप्तपताका श्रीअनेकांतजयपताका पुस्तकं मूल्येन गृहीतं। आचंद्रार्कं नंदतात् ॥ शुभं भवतु गच्छस्य ॥ ९०००

§ २६८. उत्तराध्ययनसूत्र ( मूलपाठ ) ❁ सं० १४५२ ❁ [ पाटण, संघवीपाडा भंडार ]

ग्रंथाग्र २००० शुभं भवतु । संवत् १४५२ वर्षे ज्येष्ठ वदि ८ भौमे ।

§ २६९. धर्मोपदेशमालादिप्रकरणपुस्तिका ❁ सं० १३५४ ❁ [ पाटण, खेतरवसही पाटक ]

संवत् १३५४ वर्षे पोसवदि १२ श्रीश्रीमालवंशे सा० बाहडात्मज सा० रासल पुत्रिकया मोहिणिनाम्न्या········· ।

§ २७०. शतकटीका [ देवेन्द्रसूरिकृता ] ❁ सं० १३५४ ❁ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १३५४ वर्षे कार्तिक वदि ८ भौमे ठ० सलषाकेन श्रेयसे लिखापिता ।

§ २७१. उपदेशपद ❁ सं० १३५४ ❁ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १३५४ वर्षे का० बुधे अद्येह श्रीपत्तने गूर्जर ज्ञातीय श्रावक महं देवा उठ ( सुत ? ) मालदेवेन श्रीखरतरगच्छे स्वगुरुप्रभुश्रीजिनचंद्रसूरिपादानां तपस्विनां पठनाय धर्मोपदेशशास्त्र-पुस्तिका पादौ प्रणम्य विधिना समर्पिता ।

§ २७२. स्याद्वादमञ्जरी ❁ सं० १३५७ ❁ [ पाटण, संघवीपाडा भंडार ]

संवत् १३५७ वर्षे आखाढ शुदि १ गुरावद्येह स्तंभतीर्थे इयं पुस्तिका लिखिता । शुभं भवतु श्रीश्रमणसंघस्य । मंगलं महाशुभं ।

§ २७३. निशीथसूत्रचूर्णी ❁ सं० १३५९ ❁ [ पूना, राजकीयग्रंथ संग्रह ]

इति विसेसनिसीहचुण्णीए दसमो उद्देसओ सम्मत्तो ॥ मंगलं महाश्रीः ॥ शुभं भवतु श्रीसंघस्य ॥ संवत् १३५९ वर्षे मार्ग वदि ५ सोमवारे वाचनाचार्य कनकचंद्रेण बाहुदं (?) सुपुस्तकं लिखितं ॥

§ २७४. प्रबोधचन्द्रोदयनाटक ❁ सं० १३६१ ❁ [ जेसलमेर, बृहद् भाण्डागार ]

संवत् १३६१ वर्षे··········· ।

§ २७५. पर्युषणाकल्पपुस्तिका ❀ सं० १३६४ ❀ [ पाटण, संघसत्कभाण्डागार ]

सं० १३६४ वर्षे वैशाख शुदि अक्षयतृतीयायां सोमे पर्युषणाकल्पपुस्तिका लिखापिता ॥

§ २७६. आवश्यकचूर्णि ❀ सं० १३६७ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३६७ वर्षे पोष शुदि [ ] सोमे जंघरालायां श्री० आम्बड प्रभृतिभि······श्रेयसे अष्टादशसहस्रप्रमाणमावश्यकचूर्णि पुस्तकं नव्यं गृहीतं ॥

§ २७७. चैत्यवन्दनभाष्यादिप्रकरणसंग्रह ❀ सं० १३६९ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३६९ वर्षे श्रीपत्तने लिखितमस्ति ।

§ २७८. कुशलानुबन्धिप्रकरणादि ❀ सं० १३६९ ❀ [ पाटण, महालक्ष्मीपाटकावस्थित भा० ]

संवत् १३६९ फागण सुदि ८ रवौ स्तंभतीर्थे लिखितं ॥

§ २७९. पार्श्वनाथचरित्र [ सर्वानन्दसूरिकृत ] ❀ सं० १३०६ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् त्रयोदशषट····त्तरवर्षे श्रा० शुदि द्वितीया शुक्रवारे सम्वीग्रामे ध्रुव० नागार्जुन सुत लूणाकेन श्रीपार्श्वनाथचरित्रं परिपूर्णपुस्तकं सावधानेन लिखितं ॥

§ २८०. सिद्धहेमशब्दानुशासन ❀ सं० १३७० ❀ [ पाटण, संघसत्क भां० ]

( १ ) हैमलघुवृत्ति [ चतुष्कप्रांते ] तृतीयाध्यायस्य द्वितीयः पादः समाप्तः । ग्रंथाग्र १६६५ । संवत् १३७० भाद्रपद वदि १४ चतुष्कवृत्तिर्ले० सागरेण समर्थिता । मंगलं महाश्रीः ॥ शुभं भवतु ॥

( २ ) पंचमस्याध्यायस्य चतुर्थपादः समाप्तः । सं० १३७० आश्विनवदि ४ स्तंभतीर्थे पूज्यश्री-रत्नाकरसूरीणामादेशेन लें० सागरेण पुस्तिका लिपिता ॥ ग्रंथाग्रं ॥ ३४०० ॥

§ २८१. महावीरचरित्र [ त्रिषष्ठीय ] ❀ सं० १३७२ ❀ [ पाटण, संघवीपाडा भंडार ]

संवत् १३७२ वर्षे मार्ग वदि १३ भौमे पुस्तकं लिखितमिदं ॥

§ २८२. दशवैकालिकादिप्रकरणपुस्तिका ❀ सं० १३७२ ❀ [ पाटण, तपागच्छ भाण्डागार ]

संवत् १३७२ वर्षे आषाढ व० १४ शनौ स्तंभतीर्थे श्रीउपाध्यायमिश्राणां आगमिकगच्छे पुस्तिका ॥ छ ॥

§ २८३. कल्पसूत्र ❀ सं० १३७७ ❀ [ वडोदरा, श्रीमत्कांतिविजयशास्त्रसंग्रह ]

संवत् १३७७ कार्तिक सुदि १······प्रवर्तमाने अतीव दुष्षमाकाले सागरेण लिखिता श्रीरत्ना-करसूरीणामादेशेन ॥

§ २८४. पर्युषणाकल्प-कालकसूरिकथा ❀ सं० १३७७ ❀ [ पाटण, तपागच्छ भाण्डागार ]

संवत् १३७७ वर्षे कार्तिक सुदि १५ शुक्रे पेरंसद्वीप [ वास्तव्य ] संघ० लूणाकेन पर्युषणाकल्प-पुस्तिका लिखापिता ॥

